# श्रूयतां देवानां तूर्यनादः

सिमिपाल् देवस्य आदिमसृष्टेः राजधानी अस्ति । अत्रत्ये निबिडे अरण्ये मेघावृताः खाताः, रमणीयाः जलपाताः, कलकलरवं जनयन्त्यः नद्यः इत्यादयः सन्ति। वन्यजीविनां विविधरवाणां सम्मिश्रसङ्गीतम् अत्र श्रोतुं शक्यम्। गजानां चीत्कारः, पक्षिणां कूजनं, व्याघ्रचित्रकादीनां गर्जनम् इत्यादयः अविश्रान्ततया श्रूयन्ते अत्र । कृत्रिमाश्रुपातनार्थं ख्याताः मकराः अपि अत्र द्रष्टुं शक्याः ।

आगम्यतां सिमिपालं प्रति, यत्र एतादृशाः वन्यजीविनः स्वच्छन्दविहारं कुर्वन्ति ।






# A TREASURE-TROVE FOR TALENTED TOTS





# JUNIOR CHANDAMAMA



## THE ONE-STOP COMPLETE FUN AND ACTIVITY MAGAZINE

**NOW AVAILABLE AT YOUR NEAREST NEWS STAND FOR RS.15 PER COPY**



- Games, puzzles, riddles, stories, colouring activity and more...

- Good habits grow when young. Check out articles and features in which values are taught subtly and let your child learn about Indian culture and heritage.












- Pick up a copy of Junior Chandamama for interesting new stories and puzzles to be read out to the kiddies.

**PAY ONLY RS.150 FOR ANNUAL SUBSCRIPTION AND SAVE RS.30**



चन्दमामा  सम्पुटः २२  फेब्रवरी - २००६  सञ्चिका - २



# अन्तरङ्गम्



## एतस्य अङ्कस्य विशेषाः













# निवेदनं वाचकेषु

कागदमूल्ये वृद्धिः, मुद्रणव्यये आधिक्यम् इत्यादिभिः अपरिहार्यैः कारणैः अस्माभिः अनन्यगतिकतया निर्णीतं यत् चन्दमामायाः मूल्यं वर्धनीयम् इति । फेब्रवरी(२००६) मासतः आरभ्य प्रतिसञ्चिकं मूल्यं भविष्यति रू. १३.०० । एषा अल्पा मूल्यवृद्धिः वाचकैः विना खेदं वोढव्या इति सविनयं निवेदनम् । वार्षिकं शुल्कं भविष्यति रू. १५०.०० । एतस्य लाभः भवद्भिः सर्वैः स्वीक्रियेत इति विश्वसिमः वयम् ।

– *प्रकाशकः*



*संस्थापकौ -*
चक्रपाणिः, बि. नागिरेड्डिः च

# सच्चरित्र्यवन्तः एव चेतव्याः

भारते यानि त्रिंशदधिकानि राज्यानि सन्ति तेषु पञ्चसु राज्येषु अग्रिमे मेमासे विधासभानिर्वाचनं भविष्यति । अतिमहाप्रजाप्रभुत्वोपेतं राष्ट्रं भारतम् । संविधाननिर्माणम् आरभ्य वयं शासनस्य सुचारुनिर्वहणाय अस्मत्प्रतिनिधीन् चिन्वन्तः स्मः लोकसभायै विधानसभायै च । एते अस्माकं प्रतिनिधयः गुणेन उत्कृष्टाः भवेयुः इति अपेक्षामहे वयम् ।

किन्तु अधिकारः तान् भ्रष्टान् करोति । अधिकाराधिक्यम् अधिकभ्रष्टाचारे प्रवर्तयति । अद्य निर्वाचनानि धनशक्तेः भुजबलस्य च प्रदर्शनाय अङ्गणं जातानि सन्ति ।

अस्माकं विष्णुपुराणं वदति - ''भारतं जगति श्रेष्ठा भूमिः । एतस्यां भूमौ मानवरूपेण जातः एव महाभाग्यशाली'' इति । एतादृश्याः श्रेष्ठायाः भूमेः अपचारः सर्वथा न शोभते ।

आत्मनः परिष्काराय कालः एतावता अतीतः इति न । आदौ अस्माभिः उत्तम-चारित्र्यवन्तः, मानवीयमौल्येषु श्रद्धावन्तः, देशस्य परम्परायाः उन्नयने आस्थावन्तः च जनाः एव चेतव्याः, येन च ते उत्तमेन शासनेन देशं योग्येन मार्गेण नयेयुः ।

चन्दमामा आशास्ते यत् देशे तां वैभवोपेतां स्थितिं पुनरपि आनयेत् भाविनी जनता इति ।

*सम्पादकः* - विश्रम्





# वाचकानां पुटोऽयम्

## पुणेनगरीया मनीषा शेद् गुद्मान् वदति -

**चन्दमामा** मम बाल्यस्य सहगामिनी अस्ति । मम पिता संस्कृतचन्दमामां पठति । उत्तमेन गुणस्तरेण युक्तानि चित्राणि मह्यं नितरां रोचन्ते । तथापि चित्राणां रेखासु यदि इतोऽपि परिष्कारः भवेत् तर्हि सौन्दर्यम् इतोऽपि वर्धेत । एषा पत्रिका यथा नगरवासिभ्यः, तथैव सामान्येभ्यः ग्रामवासिभ्यः अपि रोचते । एतत् वैशिष्ट्यम् एव मम प्रियम् ।

## यु.ए.इ.वासिनी शार्जानगरीया विद्या बागलोहि लिखति -

जुलैमासीयं सम्पादकीयं मह्यम् अरोचत । बालाः यन्त्रमानववत् न भवेयुः । अतिरस्करणीयं तथ्यम् एतत् । अद्यतनी शैक्षणिकव्यवस्था कीदृशी अस्ति इति अहं जानामि । यस्मिन् काले क्रीडादिकं करणीयं तदा अपि बालाः बलात् पठने न प्रवर्तनीयाः । बालाः ज्ञानसम्पादने आसक्ताः भवेयुः, उत प्रमाणपत्ररूपं कागदं प्राप्य अहितकरस्पर्धायां प्रवर्तेरन् इति अस्माभिः पालकैः अवश्यं चिन्तनीयम् ।

## आफ्रिकीयेण स्वाझिल्याण्ड्वासिना अर्फान्रहमानेन प्रेषितं पत्रम् -

भारतस्य भारतीयसंस्कृतेः च विषये पत्रिका यत् कथयति तत् प्रशंसार्हम् अस्ति । वयम् अस्मदीयात् देशात् दूरे वसामः इत्यतः एतादृशानां विषयाणां पठने समुत्सुकाः भवामः सदापि ।

## चेन्नैनगरीया कान्तलक्ष्मी चन्द्रमौलि लिखति -

बरोडातः प्रयाणसमये पितामहः पिता माता इत्यादयः ज्येष्ठाः, बालत्वेन निर्दिश्यमानाः सर्वे च उक्तवन्तः यत् वयं नियतरूपेण चन्दमामां पठामः इति । एतस्मात् एव कारणात् ज़्येष्ठाः बालान् संस्कृतिसम्बद्धाः मूल्यवतीः कथाः श्रावयितुं शक्नुवन्ति । चन्दमामायाः यशोगाथां ज्ञापयति एषा घटना ।



# लक्ष्मीपतेः भाग्यम्

लक्ष्मणपुरे लक्ष्मीपतिः नाम कश्चन कृषिकः निवसति स्म । तस्य गृहे पत्नी पञ्चदशवर्षीयः पुत्रः च आस्ताम् । पित्रार्जिता अल्पा भूमिः एव तस्य सम्पत्तिः । पर्वततः निर्गता काचित् नदी तस्य क्षेत्रस्य पार्श्वे प्रवहति स्म । तस्याः जलस्य उपयोगेन कृषिं करोति स्म सः । किन्तु गतेषु चतुर्षु वर्षेषु वृष्टिः न जाता इत्यतः सा नदी सर्वथा शुष्कप्राया जाता आसीत् ।

नद्यां जलाभावः यदा उद्गतः तदा कृषौ महान् विघ्नः एव सञ्जातः । अतः ग्रामजनाः बहवः उद्योगम् अन्विष्यन्तः ग्रामं परित्यज्य गताः । किन्तु लक्ष्मीपतिः ग्रामं परित्यज्य न गतः । सः श्रुतवान् आसीत् यत् दण्डकारण्ये वज्राणि प्राप्यन्ते इति । तस्य मनसि वज्रसम्पादनचिन्ता सदा आवर्तते स्म ।

मासात् पूर्वं सः आवश्यकवस्तूनां क्रयणाय नगरं गतवान्, कस्याञ्चित् धर्मशालायां वासम् अकरोत् च ।

तदवसरे तत्र वासार्थम् आगताः केचन वज्रविषये वार्तालापं कुर्वन्तः आसन् । तेषां वार्तालापं सश्रद्धं श्रुतवान् लक्ष्मीपतिः ।

यात्रिकेषु कश्चन अवदत् – ''भाग्यम् अनुकूलकरम् अस्ति चेदेव दण्डकारण्ये वज्रं प्राप्यते । एषु दिनेषु त्रयः वज्रान्वेषणाय तत्र गतवन्तः आसन् । तेषु एकः एव वज्रं प्राप्तवान् । अन्यौ उभौ अपि अस्वस्थौ सन्तौ प्रत्यागतौ'' इति ।

तदा अपरः अवदत् – ''भाग्यम् अनुकूलकरम् अस्ति उत न इति तु प्रयत्नस्य आरम्भस्य अनन्तरम् एव खलु ज्ञायते ? वज्रम् इच्छता तु आदौ गृहात् निर्गत्य साहसबुद्धिः प्रदर्शनीया'' इति ।

अन्यौ यात्रिकौ तस्य कथनं समर्थितवन्तौ । ''लाभालाभौ दैवाधीनौ । लाभम् इच्छता किञ्चित् त्यागः अपि करणीयः भवति कदा-

चित्'' इति अवदतां तौ ।

तेषां सम्भाषणं श्रुतवान् लक्ष्मीपतिः किमपि निर्णीय अनन्तरदिने गृहं प्रतिगतवान् ।

गृहं प्राप्तवान् सः पत्नीम् आहूय धर्मशालायां श्रुतं समग्रं श्रावयित्वा अवदत् - ''भवती कानिचन दिनानि स्वस्य भ्रातुः गृहे निवसतु । अहं वज्रविषये मम भाग्यं परीक्ष्य आगमिष्यामि'' इति ।

सङ्कल्पितं कार्यं मम पतिः न त्यजति इति पत्नी जानाति स्म । अतः सा भ्रात्रे वार्तां प्रेषितवती । तस्याः सहोदरः अविलम्बेन आगतः । सा तं प्रवृत्तं सर्वं निवेदितवती ।

तस्याः भ्राता लक्ष्मीपतिम् अबोधयत् - ''श्यालवर्य ! भवतः एषः निर्णयः सर्वथा अनुचितः । दण्डाकारण्यं प्रति गमनस्य विचारः परित्यज्यताम् । वर्षत्रयम् अत्र वृष्टिः न जाता इति तु सत्यम् एव । किन्तु एतस्य एतत् तात्पर्यं न यत् एतस्मिन् अपि वर्षे वृष्टिः न भवेत् इति । वृष्टिः अचिरात् एव भवेत् अपि । अतः अलं निराशतया'' इति ।

तथापि लक्ष्मीपतिः स्वस्य सङ्कल्पं परित्यक्तुम् अनिच्छन् दण्डकारण्यं गतवान् । तत्र अन्ये अपि बहवः आगताः आसन् । लक्ष्मीपतिः तैः सह वज्रान्वेषणं कृतवान् । किन्तु साफल्यं तु न प्राप्तम् । अस्वास्थ्यं प्राप्य सः प्रत्यागतः ।

गृहं प्रति आगमनस्य पक्षस्य अनन्तरं सः स्वस्थः जातः । तावता तत्र वृष्टिः जाता । अतः नद्यां जलप्रवाहः आरब्धः । प्रवाहेण केचन पाषाणाः अपि आनीताः ।

नद्यां यदा जलम् अधिकं जातं तदा लक्ष्मीपतिः जलबन्धं भञ्जितवान् । तस्मात् क्षेत्रे सञ्चितं जलम् अपगतम् । तदा जलप्रवाहेण आनीताः क्षेत्रे स्थिताः पाषाणखण्डाः दृष्टिगोचरतां गताः । लक्ष्मीपतिः तान् एकैकशः सङ्गृह्य क्षेत्रात् बहिः राशीकृतवान् । तदवसरे तेन प्रकाशमानं शिलाखण्डद्वयं प्राप्तम् । सः तत् स्वीकृत्य गृहम् आगत्य श्यालाय दर्शितवान् । श्यालः तदुभयं तीक्ष्णदृष्ट्या परिशील्य अवदत् - ''एतदुभयम् अपि अपरिष्कृतं वज्रम् । भवतः भाग्यं तु स्वक्षेत्रे एव निहितम् आसीत्, न तु दण्डकारण्ये'' इति ।



# उपहासशीलता

चारुलता हेमलता च प्रतिवेशिन्यौ । उभयोः अपि वयः समानम् । उभे अपि सुशिक्षिते । उभयोः अपि पती व्यवहारचतुरौ दक्षौ च । अतः तौ उभौ अपि सम्यक् एव धनं सम्पादयतः ।

गृहकार्यं समाप्य चारुलता हेमलता च गृहस्य पुरतः उपविश्य जल्पनं कुरुतः । आपाततः दर्शनात् तु भासते स्म यत् एतयोः गाढं सख्यम् अस्ति इति । वस्तुतः तु उभे अपि अन्यस्याः उपहासाय अवसरं प्रतीक्षेते स्म ।

कदाचित् एवं गृहस्य पुरतः उपविश्य ते जल्पने मग्ने आस्ताम् । तदवसरे चारुलता उक्तवती – ''एषु दिनेषु मम पतिः यथापूर्वं मयि अनुरागवान् आदरवान् च न दृश्यते । न जाने एतस्य किं कारणम् इति'' इति ।

तदा हेमलता अवदत् – ''एवम् ! मम गृहे तु एवं नास्ति । पूर्वं यावान् अनुरागः आदरः च आसीत् ततोऽपि अधिकतया दृश्यते मम पतौ इदानीम्'' इति ।

एतत् श्रुत्वा चारुलता उपहासमिश्रितेन स्वरेण अवदत् – ''युक्तम् एतत् ! भवत्याः पत्युः तु प्राचीनवस्तूनां वाणिज्यम् ! अतः तादृशेषु वस्तुषु तस्य प्रीतिः आदरः च सहजः एव खलु'' इति ।





# स्वयंनिर्णयप्रवृत्तिः

लक्ष्मीपुरनामके लघुग्रामे रामः सोमः कनकः चेति त्रयः सुहृदः निवसन्ति स्म । त्रयः अपि कृषिकाः एव । तेषु रामः सोमः च बुद्धिमन्तौ । कनकः तयोः मार्गदर्शनं प्राप्य एव सर्वाणि कार्याणि करोति स्म । तयोः अभिप्रायम् अपृष्ट्वा सः लघुविषये अपि निर्णयं न करोति स्म । त्रयाणाम् अपि मैत्री सुदृढा आसीत् इत्यतः रामः सोमः च सर्वदा कनकस्य साहाय्यं कुरुतः स्म एव ।

कदाचित् तैः त्रिभिः अपि उत्तमा फल-समृद्धिः प्राप्ता । अतः रामः सोमः च निश्चित-वन्तौ यत् राजधान्यां प्रचलिष्यमाणे वसन्तोत्सवे भागः ग्रहीतव्यः इति । यदा एषा वार्ता कनकेन ज्ञाता तदा सः तौ अवदत् यत् अहमपि भवद्भ्यां सह आगमिष्यामि इति ।

तदा रामसोमौ उक्तवन्तौ – ''यात्रा दीर्घा अस्ति । राजधानी, गमनमार्गः वा ज्ञातपूर्वः तु न । अतः अतर्किततया विपदः उपस्थिताः भवेयुः अपि । तस्मात् भवतः अनागमनम् एव वरम्'' इति ।

मित्राभ्यां बहुधा बोधितं चेदपि कनकः न अङ्गीकृतवान् । सः अवदत् – ''यावत् भवन्तौ मया सह भवतः तावत् मम भीतिः किमर्थम् ? अहम् अपि भवद्भ्यां सह आगमिष्यामि एव'' इति ।

ततः त्रयः अपि प्रयाणम् आरब्धवन्तः । अरण्यमार्गे गच्छन्तः आसन् ते । काचित् नदी अतिक्रमणीया अभवत् तैः । अतः ते तीरे इतस्ततः दृष्टवन्तः । सौभाग्यवशात् तत्र कश्चन उडुपः दृष्टः तैः । ते तम् उडुपम् आरुह्य नदीक्रमणाय उद्युक्ताः जाताः ।

नद्याः उत्पत्तिप्रदेशे वृष्टिः जाता इत्यतः नद्याम् अकस्मात् प्रवाहः प्रवृद्धः । क्षणे क्षणे प्रवाहवेगः प्रवृद्धः । तस्मात् तेषाम् उडुपः प्रवाहेण नीयमानः जातः । त्रयः अपि भीत्या परस्परम् आलिङ्ग्य उपविष्टवन्तः ।

किञ्चित्कालानन्तरं ते यावत् नेत्रे उन्मीलितवन्तः तावता तेषाम् उडुपः कस्मिंश्चित् द्वीपतीरे स्थितः आसीत् । महती बुभुक्षा तान् बाधते स्म । तीरे एव कश्चन आम्रवृक्षः तैः दृष्टः । अतः आम्रफलानि प्राप्तुं ते द्वीपे पदं स्थापयन्तः वृक्षसमीपं गतवन्तः ।

रामः यावत् फलं प्राप्तुं हस्तं प्रसारितवान् तावता कश्चन पिशाचः तस्मात् वृक्षात् उत्प्लुत्य क्रोधेन अगर्जत् - ''मम अनुज्ञां विना कः सः आम्रम् उत्पाटयितुं प्रवर्तते ?'' इति ।

पिशाचं दृष्ट्वा ते त्रयः अपि ततः धावनाय यावत् उद्युक्ताः तावता पिशाचः उच्चैः हसन् अवदत् - ''भो भोः ! अलं भीत्या । अहम् अपायं कमपि न करोमि । मा धावन्तु भवन्तः'' इति ।

भयम् अनुभवन्तः एव त्रयः अपि पिशाचसमीपं गतवन्तः ।

''भवद्भिः कथम् अत्र आगतम् ?'' इति अपृच्छत् पिशाचः ।

ते प्रवृत्तं सर्वम् अवदन् । तेषां दुरवस्थां दृष्टवान् पिशाचः तेभ्यः फलानि दत्तवान् । तानि खादित्वा ते तं कृतज्ञतावचनानि अवदन् ।

तेषां व्यवहारेण सन्तुष्टः पिशाचः तान् अवदत् - ''इतः अन्यत्र भवतां गमनं सर्वथा असम्भवम् । अतः अहम् एकैकस्मै एकैकं वरं ददामि । किन्तु त्रिभिः अपि समानः वरः न याचनीयः इति तु नियमः । यत् इष्यते तत् प्रार्थ्यताम्'' इति ।

''मां पत्नीपुत्रादीनां समीपं नयतु'' इति अवदत् रामः । पिशाचः अनन्तरक्षणे तं तत्र प्रापयत् ।

''वसन्तोत्सवे भागग्रहणाय अहम् उद्युक्तः



आसम् । अतः मां राजधानीं प्रापयतु'' इति प्रार्थितवान् सोमः । पिशाचः तं राजधानीं प्रापितवान् ।

इदानीं वरप्रार्थनावसरः आसीत् कनकस्य । किं प्रार्थनीयम् इति न ज्ञातं तेन । सहायकौ रामसोमौ न आस्तां तत्र । किञ्चित्कालं सः अचिन्तयत् । ततः किमपि सङ्कल्प्य सः पिशाचम् अवदत् - ''किं प्रष्टव्यम् इति मया न ज्ञायते । अहं सर्वदा एतादृशेषु प्रसङ्गेषु मित्रयोः साहाय्यं स्वीकरोमि । अतः रामसोमौ अत्र आनीयेताम्'' इति ।

अनन्तरक्षणे एव पिशाचः रामसोमौ तत्र उपस्थितौ कृत्वा ततः अदृश्यतां गतः । किं प्रवृत्तम् इति रामसोमौ अवगतवन्तौ ।

तौ विषादम् अनुभवन्तौ कनकम् उक्तवन्तौ - ''एवं किमपि भवेत् इति विचिन्त्य एव आवाभ्याम् उक्तम् आसीत् यत् भवता न आगन्तव्यम् इति । 'मां गृहं प्रापय' इति यदि भवान् पिशाचम् अवदिष्यत् तर्हि एतत् कष्टं न अभविष्यत् । मार्गदर्शनप्राप्त्यर्थम् आवाम् अत्र आनाय्य कष्टे पातितौ भवता । इतः गृहं प्रति अस्माकं गमनं कथं भवेत् ?'' इति ।

अल्पे एव काले पिशाचः पुनरपि प्रत्यक्षीभूय कनकम् अपृच्छत् - ''किं भवता मित्रयोः साहाय्यं प्राप्तम् ?'' इति ।

पिशाचस्य उपस्थितिं दृष्ट्वा सन्तुष्टौ रामसोमौ उक्तवन्तौ - ''एषः लघुप्रसङ्गे अपि आवयोः साहाय्यं याचते । तस्मात् एवं प्रवृत्तम् । कृपया भवान् एतं ग्रामं प्रापयतु, आवां च पूर्वं यत् प्रार्थितवन्तौ तदनुगुणं करोतु । ततः आजीवनं कृतज्ञाः भवामः वयम्'' इति ।

एतत् श्रुत्वा हसन् पिशाचः अवदत् - ''अन्यस्य मार्गदर्शनप्राप्तिः न दोषाय । तथापि सर्वदा एतत् न शोभते । उचितानुचितनिर्णयः स्वयं करणीयः । बुद्धिहीनतया व्यवहरन्तः यदि वयं सदा अन्यान् एव अवलम्बामहे तर्हि स्वयं कष्टे पतन्तः अन्यान् अपि कष्टे पातयेम'' इति । ततः सः तान् त्रीन् अपि तत्तदभिलषितं स्थलं प्रापितवान् ।

निर्णयस्वीकारे अन्येषाम् अवलम्बनेन कीदृशं कष्टं भवति इति कनकः सम्यक् अवगतवान् । तस्मात् सः प्रयत्नेन स्वयंनिर्णयप्रवृत्तिम् आरब्धवान् । अचिरात् एव सः तत्र सफलतां प्राप्तवान् अपि ।





# भयङ्करः खातः

## ४

*[केशवः विचित्रजन्तुम् आरुह्य गच्छन् पर्वतप्रदेशं प्राप्तवान् । तत्र कस्याश्चित् गुहायां कश्चन मान्त्रिकः कालभैरवमूर्तिं दर्शितवान् । कालभैरवस्य नेत्राभ्यां पश्यन् केशवः अरण्ये प्रचलन्तं कोलाहलम् अपश्यत् । पक्षाभ्यां युक्तः, जतुकाकारः, आकाशे डयमानः कश्चन विलक्षणः जीवी तेन दृष्टः । सः जीवी सैनिकान् दूरं प्रेषयन् अपि दृष्टः तेन । तदनन्तरम्...]*

राजसैनिकान् इतस्ततः धावयन् सः घोराकारः केशवे महत् आश्चर्यम् अजनयत् । सः इतः पूर्वं मनुष्यमुखाम् जतुकाम्, जतुकाशरीरयुक्तं मनुष्यं वा न दृष्टवान् आसीत् । तादृशस्य जीविनः सत्ता अपि तेन न श्रुता आसीत् ।

अहं यत् पश्यामि तत् वस्तुतः अपि अस्ति, उत मान्त्रिकः मायाप्रभावेण एतादृशं सृष्टवान् इति अजानन् सः आश्चर्येण चिन्तने मग्नः आसीत् ।

"वत्स ! केशव ! कालभैरवस्य शक्तिः दृष्टा खलु ? इतःपरं भवतः पितुः कापि आपत्तिः न भविष्यति । राजसैनिकाः भीत्या ब्रह्मपुरं प्रति धावन्तः सन्ति । भवतः भवत्पितुः च रक्षणदायित्वं मम इति मया पूर्वम् उक्तम् एव खलु ? इदानीं भवान् स्वस्य स्कन्धे स्थितं वस्त्रम् अपनयतु । स्वस्य सन्देहं निवारयतु च" इति अवदत् मान्त्रिकः ।



मान्त्रिकस्य वचने केशवस्य विश्वासः उत्पन्नः । 'एषः वस्तुतः अपि सैनिकान् दूरं गमयन् अस्ति, मम पितरं च रक्षति, इतःपरं मम मत्पितुः वा कोऽपि अपायः न भविष्यति' इति सः अचिन्तयत् । मान्त्रिकेण यथा उक्तं तत् अकरोत् च ।

मान्त्रिकः केशवस्य स्कन्धे हस्तं स्थापयन् अवदत् – ''अहो, आश्चर्यम् ! वत्स ! भवान् महाभाग्यशाली । भवतः जन्मपत्रम् अपूर्वम् अस्ति । यथा भवान् इच्छति तथा प्रवर्तते एव । महाराजलक्षणं प्राप्य एव जन्म प्राप्तवान् अस्ति भवान्'' इति ।

''मम वचने भवतः इतोऽपि सन्देहः ? सर्वं प्रत्यक्षं दर्शयामि तावत्'' इति वदन् मान्त्रिकः गुहातः निर्गतवान् । मम स्कन्धे किं दृष्ट्वा मान्त्रिकः महान्तं सन्तोषं प्राप्तवान् स्यात् इति चिन्तयन् केशवः स्वस्य स्कन्धं पुनः पुनः अपश्यत् । तत्र किमपि चिह्नं न दृष्टम् । स्पर्शनेन अपि किमपि न अनुभूतम् । सः अचिन्तयत् – 'यत् मया न दृष्टं तत् मान्त्रिकेण मन्त्रबलात् दृष्टं स्यात्' इति ।

यावत् सः एवं चिन्तयन् आसीत् तावता मान्त्रिकः तत्र पुनः आगतवान् हस्ताभ्यां कमपि पत्ररसम् उत्पादयन् । ''वत्स ! तत् चिह्नं सामान्यदर्शनेन भवता न ज्ञायते । एतेन पत्ररसेन पृष्ठभागः लिप्यताम् । तदा तत् दृश्यते भवता'' इति उक्त्वा पत्ररसेन केशवस्य पृष्ठभागम् अलिम्पत् ।

रसस्पर्शात् केशवस्य स्कन्धे कृष्णसर्पचिह्नं दृष्टिगोचरतां गतम् । तस्य दर्शनात् उभौ अपि सन्तुष्टौ जातौ ।

''वत्स ! केशव ! इतःपरं वशीकर्तुम् अनर्हा कापि शक्तिः न भविष्यति । कालभैरवः, आदिभैरवः, उन्मत्तभैरवः इत्यादयः सर्वे एतस्यां गुहायां वासं करिष्यन्ति'' इति आनन्देन अवदत् मान्त्रिकः । ततः सः उच्चैः मन्त्रं जपन् कालभैरवं साष्टाङ्गं नमस्कृतवान् । अल्पे एव काले मन्त्रं जपन् एव सः समाधिस्थः जातः ।

मान्त्रिकः कदा नेत्रे उन्मीलयेत् इति केशवः प्रतीक्षमाणः अतिष्ठत् । पञ्चदश निमेषाः अतीताः चेदपि मान्त्रिकः नेत्रे न उन्मीलितवान् । एतदभ्यन्तरे केशवस्य मनसि हठात् कश्चन प्रश्नः उद्भूतः – एषः मान्त्रिकः मां कालभैरवाय अर्पयितुं तु न आनीतवान् स्यात् खलु ?' इति । 'मयि विश्वासं जनयितुम् एव उपकारप्रवृत्तिः दर्शिता स्यात् । मम पितुः

रक्षणाय एव मन्त्रशक्तेः प्रयोगः अपि कृतः स्यात्'' इति सन्देहः तस्मिन् उत्पन्नः । अतः सः स्वीयानाम् अस्त्राणाम् अन्वेषणे उद्युक्तः जातः ।

तदीयः खड्गः, धनुर्बाणादयः च गुहाद्वार-समीपे आसन् । केशवः धावन् गत्वा यावत् तेषां स्वीकाराय हस्तं प्रसारितवान् तावता कश्चन ध्वनिः श्रुतः - ''केशव ! अलं त्वरया'' इति ।

केशवः आश्चर्यम् अनुभवन् मुखम् उन्नीत-वान् । पुरतः विंशतिवर्षीयः कश्चन तरुणः स्थितः आसीत् ।

''कः भवान् ? किमर्थम् अत्र आगतं भवता ?'' इति अपृच्छत् केशवः ।

''अहं ब्रह्मदण्डिमान्त्रिकस्य शिष्यः अस्मि । अहम् अन्यतः न आगतः । अत्रैव वसामि अहम्'' इति अवदत् युवकः ।

''ब्रह्मदण्डिमान्त्रिकः सः कः ?'' इति अपृच्छत् केशवः ।

''अये मुग्ध ! एतदपि किं न ज्ञायते भवता ?'' इति वदन् सः तरुणः साष्टाङ्ग-नमस्कारं कृत्वा समाधिं गतं मान्त्रिकं प्रादर्शयत् हस्तसङ्केतेन ।

''अकस्मात् भवतः दर्शनात् अहं नितरां भीतः आसम्'' इति अवदत् केशवः खड्गं बाणान् धनुः च स्वीकुर्वन् ।

''एतावती भीतिः न युज्यते । एवं भीतिः प्राप्यते चेत् भाविनी महाविपत्तिः कथं सम्मुखीक्रियेत भवता ?'' इति हसन् अपृच्छत् युवकः ।

''भाविनी सा महाविपत्तिः का ?'' इति



आश्चर्यपूर्वकं पृष्टवान् केशवः । 'विचित्रजन्तोः दर्शनात् आरभ्य विपत्तयः निरन्तरं सम्मुखी-क्रियमाणाः सन्ति' इति चिन्तयता तेन विचित्र-जन्तुः स्मृतः । सः इतस्ततः दृष्टिं प्रासारयत् । विचित्रजन्तुः तत्र कुत्रापि न दृष्टः ।

''किम् अन्विष्यता भवता दृश्यते सर्वत्र ?'' इति अपृच्छत् युवकः ।

''कश्चन विलक्षणजन्तुम् आरुह्य मया अत्र आगतम् । सः विलक्षणजन्तुः इदानीं कुत्र गतः स्यात् इति पश्यन् अस्मि'' इति अवदत् केशवः ।

तदा युवकः हसन् अवदत् - ''अहमेव अस्मि सः विलक्षणजन्तुः । मया उक्तं खलु - अहम् एतस्य ब्रह्मदण्डिमान्त्रिकस्य शिष्यः अस्मि इति । मम नाम जयमल्लः इति । मम कारणात् एव भवता एतावत्यः विपत्तयः




प्राप्ताः इत्यतः अहं भवतः रक्षणे आसक्तः अस्मि'' इति ।

जयमल्लस्य कथनं श्रुत्वा केशवः अवगतवान् यत् गुरुशिष्ययोः सम्बन्धः उत्तमः नास्ति इति । सः गुहायाः अन्तः दृष्टिं प्रासारयत् । ब्रह्मदण्डी मान्त्रिकः तु समाधिस्थः भूत्वा निश्चेतनः इव पतितः आसीत् ।

''एतस्याम् अवस्थायां सः आवयोः सम्भाषणं सर्वथा न शृणोति । सः भक्तिवशात् मूर्च्छितः अस्ति । यदि वयं न उत्थापयेम तर्हि सूर्यास्तपर्यन्तम् अपि सः एवम् एव तिष्ठेत्'' इति अवदत् जयमल्लः ।

''तदस्तु नाम । काचित् महाविपत्तिः आपतिष्यति इति भवता उक्तं खलु ? का सा विपत्तिः ? कुतः आगमिष्यति सा ? तस्याः विषये किं भवान् अधिकं विवरणं जानाति ?'' इति अपृच्छत् केशवः । जयमल्लः उत्तरं किमपि अवदन् हस्तसङ्केतेन ब्रह्मदण्डिमान्त्रिकं दर्शितवान् ।

''एवं तर्हि अहम् इतः निर्गमिष्यामि झटिति एव । कः मम अवरोधं कुर्यात् ?'' इति अवदत् केशवः ।

जयमल्लः मन्दहासं प्रकटयन् केशवस्य स्कन्धे हस्तं स्थापितवान्, तं ततः दूरं नीतवान् च । ''यः ब्रह्मदण्डिमान्त्रिकस्य अधीनः भवति, सः तस्मात् आत्मानं रक्षितुं कथमपि न शक्नोति । तस्य मारणं कृतं चेदेव इतः निर्गमनं शक्येत, न अन्यथा'' इति केशवम् अवदत् सः ।

''एवं तर्हि तत् कार्यम् इदानीम् एव करवाव । स तु इदानीं मूर्च्छां गतः अस्ति । अहं खड्गेन तं मारयिष्यामि इदानीम्'' इति उक्त्वा खड्गम् उन्नीय गुहायाः दिशि प्रस्थितवान् केशवः ।

जयमल्लः तं स्कन्धे गृहीत्वा तदीयं गमनं निवारयन् अवदत् - ''मित्र ! अलं त्वरया । यदि आवयोः ऐक्यं भवति तर्हि यदाकदाचिदपि तं मारयितुं शक्नुयाव आवाम् । इदानीं तस्य मारणतः भवतः को वा लाभः ? यदि भवान् इतः पलायनं कुर्यात् तर्हि शत्रुसैनिकाः भवन्तं गूढचरं भावयन्तः बलात् गृह्णीयुः एव । एतत् स्मर्यते खलु भवता ?'' इति ।

''राजसैनिकान् मनुष्यमुखयुतः जतुकापक्षयुक्तः कश्चन विकृताकारः एतावता एव अरण्यात् प्रेषितवान् अस्ति खलु ?'' इति अवदत् केशवः ।

एतत् श्रुत्वा जयमल्लः उच्चैः हसितवान् । ततः सः केशवम् उच्चस्थलं प्रति नीत्वा आधोभागं दर्शयन् अवदत् - "तत्र पश्यतु । कियन्तः सैनिकाः अरण्ये भवतः अन्वेषणे उद्यताः सन्ति इति ज्ञायते" इति ।

केशवः महत् आश्चर्यं प्राप्य दिङ्मूढः जातः । केचन अश्वारोहिणः, पुनः केचन पदातयः च गुल्मानां मध्ये अन्वेषणे रताः आसन् ।

"मान्त्रिकः कालभैरवस्य नेत्राभ्यां यत् दर्शितवान् तत् किं भ्रमात्मकम् एव ?" इति आश्चर्येण अपृच्छत् केशवः ।

"किम् अन्यत् ? माम् अपि सः विलक्षणजन्तुरूपेण परिवर्त्य प्रेषितवान् आसीत् । सुखेन जीवन्तं भवन्तं कष्टे पातयता मया भवान् अत्र आनीतः । परतन्त्रः अहम् अनन्यगतिकः आसम् । भवतः स्कन्धे अपूर्वं कालसर्पचिह्नं दृष्टवान् सः नितरां सन्तुष्टः अस्ति । यस्याः प्राप्त्यर्थं सः एतावन्ति दिनानि निरन्तरं परिश्रमं कृतवान् तां सः भवत्साहाय्येन इतः परं प्राप्तुम् अर्हति । तदर्थं सः भवतः उपयोगं कुर्यात् एव । किम् एतत् ज्ञायते भवता ?" इति अपृच्छत् जयमल्लः ।

"तेन प्राप्तुम् इष्टा सा शक्तिः का ? तदर्थं सः मम कीदृशम् उपयोगं करिष्यति ? मम योग्यतायाः परीक्षा कथं क्रियते तेन ?" इति अपृच्छत् केशवः ।

जयमल्लः मन्दहासमात्रं प्रकटितवान् । किञ्चित्कालं केशवं निर्निमेषं दृष्ट्वा सः केशवस्य हस्तौ स्वहस्तेन गृहीत्वा अवदत् - "केशव ! इतःपरम् आवां सुहृदौ । कोऽपि आवयोः मैत्रीं भञ्जयितुं नार्हति । आवाभ्यां ब्रह्मदण्डि-



मान्त्रिकस्य कारणतः विपत्तिः सम्मुखीकरणीया भविष्यति निश्चयेन । किन्तु यदि आवाम् ऐकमत्येन भवेव तर्हि तस्य तन्त्रं न फलेत् । सः यां शक्तिं प्राप्तुं प्रयतमानः अस्ति ताम् आवाम् एव प्राप्नुयाव । भवतः उपयोगः कथं क्रियते तेन मान्त्रिकेण इति अहं जानामि ...''

जयमल्लस्य कथनं यावत् न समाप्तं तावता आकाशे विद्युत् स्फुरिता । विस्फोटः कश्चन श्रुतः । पर्वतः एव खण्डशः पतन् इव ताभ्यां दृष्टः ।

एतस्य विस्फोटस्य कारणतः महाशिलाः काश्चन अधः पतिताः । यस्यां शिलायां स्थितम् आसीत् तां त्यक्त्वा धावितवन्तौ केशवः जयमल्लश्च । तावता गुहास्थः मान्त्रिकः उच्चैः आक्रन्दनं कुर्वन् गुहातः वेगेन बहिः आगतवान् ।

अरण्यं पश्यन् सः अवदत् - ''अहो, कालभैरवस्य अपारा शक्तिः !! अहो, मम मन्त्रशक्त्याः प्रभावः ! पर्वतः कम्पमानः इव अस्ति । अहं पक्षी इव उड्डयने समर्थः अस्मि । आकाशात् विद्युतः पातयितुं मम सामर्थ्यम् अस्ति । वर्षणम् अपि कारयितुं शक्तः अस्मि अहम् । प्रलयम् एव उत्पादयितुम् अपि शक्तोऽहम् । ते राजसैनिकाः पर्वतम् आरोढुम् इच्छन्ति स्म । इदानीं ते प्राणरक्षणाशया धावन्तः सन्ति । मायामय्यः शिलाः तेषाम् उपरि पतन्त्यः दृश्यन्ते । इतःपरं ते पर्वतं कटाक्षेणापि न द्रक्ष्यन्ति । ह..ह..ह..'' इति ।

केशवः जयमल्लः च पर्वतमूलं दृष्टवन्तौ । अश्वारोहिणः पदातयः च सैनिकाः धावन्तः आसन् । भूकम्पात् इव महाशिलाः पर्वततः पतन्त्यः दृश्यन्ते स्म । शिलापतनकारणतः केचन सैनिकाः मरणं प्राप्तवन्तः आसन् । अन्ये केचन आत्मरक्षणाय प्रयतमानाः आर्तनादं कुर्वन्ति स्म ।

केशवः तु एतत्सर्वं पश्यन् क्षणकालं स्तब्धः । यावत् सः सुस्थितिं प्राप्तवान् तावता ब्रह्मदण्डिमान्त्रिकस्य उच्चः आदेशः श्रुतः - ''भोः, शिष्य ! केशवं किणाङ्कितस्य सिंहस्य गुहायाः पुरतः स्थिते गजसरोवरे स्नापयित्वा अत्र आनयतु । अद्य सूर्यास्तस्य अनन्तरम् अस्माभिः बहूनि कार्याणि करणीयानि सन्ति'' इति ।



वेताल-कथा

# नास्तिककृता देवप्रार्थना

अङ्गीकृतं कार्यं परित्यक्तुं सर्वथा अनिच्छन् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगत्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् – "अये राजन् ! भवान् आस्तिकः उत नास्तिकः इत्येव न ज्ञायते मया । आस्तिकः अपि कश्चित् दानादि-पुण्यकार्याणि कृत्वा अपि दरिद्रः भवितुम् अर्हति । नास्तिकः अपि कदाचित् पुण्यकार्ये अनासक्तः सन्नपि कोट्यधिपतित्वं प्राप्य सर्वविधसुखानि अनुभवति । अतः पापपुण्यादयः एव प्रगत्यादीनां कारणानि न भवन्ति सर्वदा अपि । एतस्य अवगमनाय



आस्तिकस्य पितुः, नास्तिकस्य पुत्रस्य च कथां श्रावयामि । तेन भवतः मार्गायासः अपि परिहृतः भवेत् । तस्मात् तां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

भाग्यपुरनिवासी धनपालः परम्पराप्राप्तं महत् ऐश्वर्यं प्राप्तवान् आसीत् । तस्मिन् दया दैवभक्तिः इत्यादयः अधिकतया आसन् । तस्य गृहं गतः कोऽपि याचकः रिक्तहस्ततया न प्रत्यागच्छति स्म । तस्य पत्नी सुरुचिः दानदैवपूजादिषु यद्यपि आसक्ता एव, तथापि पत्युः एषा अतिदानशीलता तस्यै न रोचते स्म । सा सदा पतिं स्मारयति स्म - 'पूर्वजैः आर्जिता सम्पत्तिः अस्माभिः संरक्ष्य असमद्-अनन्तरीयेभ्यः दातव्या । एतत् अस्माकं कर्तव्यम्' इति ।

किन्तु धनपालः तस्याः एतस्मिन् वचने आदरवान् न आसीत् ।

श्रीपालः, गोपालः, गुणपालः चेति तस्य त्रयः पुत्राः । द्वितीयः तृतीयः च पुत्रौ पितुः व्यवहारम् अनुमन्येते स्म । किन्तु ज्येष्ठः पुत्रः न तादृशः । सः बाल्यात् एव नास्तिकः । महाकृपणः अपि ।

धनपालः कदाचित् पत्नीम् अवदत् - ''धनं न शाश्वतम् । तत् सन्तोषमूलं न । मानवाय सन्तोषं दातुम् अर्हति सन्तृप्तिमयं जीवनम् एकम् एव । यस्मिन् दैवभक्तिः दयागुणः च न भवति सः कदाचिदपि सन्तोषेण जीवितुं न अर्हति'' इति ।

किन्तु पत्नी एतं वादं खण्डयन्ती अवदत् - ''यदा धनं भवति तदा तस्य मूल्यं न ज्ञायते । धनाभावदशायाम् अस्माकं सद्गुणाः अस्मान् न पोषयन्ति । ये उपयोगाय न भवन्ति तेषाम् आश्रयणेन किम् ?'' इति ।

पुत्राः यावत् प्रौढाः जाताः तावता धन-पालस्य समग्रं धनं व्ययितं जातम् । विंशति-एकर्मिता भूमिः अवशिष्टा । भूमितः यः आयः प्राप्येत ततः कुटुम्बपोषणं भवितुं न अर्हति स्म । अतः सः भूमेः कञ्चित् भागं विक्रेतुम् ऐच्छत् । तदा सुरुचिः अवदत् - ''पुत्राः प्रौढाः जाताः सन्ति । तेषां भागं तेभ्यः आदौ ददातु । ततः स्वीयं भागं यथेष्टम् उपयोक्तुम् अर्हति भवान्'' इति ।

धनपालः पत्न्या यथा सूचितं तथा भूमिं चतुर्धा विभक्तवान् । पुत्रान् उक्तवान् च - ''अस्मासु एकैकः अपि एकैकस्य भूभागस्य स्वामी अस्ति । यः व्ययविषये मम व्यवहारे

सम्मतिं न भजते सः स्वीयं भागं स्वीकर्तुम् अर्हति । ये मम व्यवहारं समर्थयन्ति ते एव मया सह तिष्ठन्तु नाम'' इति ।

द्वितीयतृतीयौ पुत्रौ तु निश्चितवन्तौ यत् आवाभ्यां पित्रा सह एव वासः करणीयः इति । ज्येष्ठः पुत्रः श्रीपालः पार्थक्येन वासम् इष्टवान् ।

कृषौ तस्य विश्वासः न आसीत् । अतः सः वाणिज्यक्षेत्रं प्रविष्टवान् । अल्पे एव काले सः प्रभूतं धनं सम्पादितवान् अपि । द्वित्राः सुहृदः ततः अर्थसाहाय्यं याचितवन्तः । किन्तु सः कस्मैचिदपि धनं न दत्तवान् । जनाः तं महाकृपणं भावितवन्तः ।

अल्पे एव काले धनपालः भूमिं विक्रीतवान् । ततः प्राप्तं धनम् अपि समाप्तम् । सः अन्यान् साहाय्यम् अयाचत । किन्तु कोऽपि साहाय्यं न कृतवान् । तदा धनपालः अवगतवान् यत् सामर्थ्यम् अतिरिच्य धनस्य दानम् अनुचितम् इति ।

यदा मार्गान्तरं न दृष्टं तदा सः सकुटुम्बं ज्येष्ठस्य पुत्रस्य गृहं गत्वा अवदत् - ''वत्स ! भवति या दूरदर्शिता आसीत् सा मयि न आसीत् । भवान् इदानीं मह्यं किञ्चित् धनं ददातु ऋणरूपेण । अहं ततः वाणिज्यस्य आरम्भं करोमि । तेन कुटुम्बपोषणं कुर्वन् काले भवतः ऋणम् अपि प्रत्यर्पयिष्यामि'' इति ।

तदा श्रीपालः अवदत् - ''इदानीं भवतः हस्ते धनं नास्ति । अतः भवता एवम् उच्यते । धनं यदि हस्तगतं स्यात् तर्हि यथापूर्वं व्यवहरेत् अपि भवान् । अतः भवान् मया सहैव



निवसतु । भवन्तं यथायोग्यं पोषयिष्यामि अहम् । एकः एव नियमः यत् यावत् भवन्तः मया सह निवासं करिष्यन्ति तावत् भवत्सु केनापि देवपूजा दानं वा न करणीयम् इति'' इति ।

पुत्रस्य एतं नियमं श्रुत्वा धनपालः नितरां कुपितः । सः क्रोधेन एव - ''यावत् अहं जीवामि तावत् पूजादित्यागः मया सर्वथा न करिष्यते'' इति उक्त्वा कुटुम्बजनैः सह ततः निर्गतवान् ।

नास्तिकः सन् अपि पुत्रः मयि गौरवं प्रदर्शितवान्, विनयेन च व्यवहृतवान् इति धनपालस्य सन्तोषः तु आसीत् एव । किन्तु धनस्य दाने तेन निराकृतिः दर्शिता, वासाय नियमः सूचितः च इत्यतः सः नितरां खिन्नः जातः ।



एतम् आघातम् असहमानः सः अस्वस्थः जातः । योग्यायाः चिकित्सायाः अभावतः तदीया शरीरस्थितिः दिने दिने नितरां दुर्बला जाता ।

एषु एव दिनेषु अङ्गदः नाम कश्चन राम-भक्तः तं ग्रामम् आगतवान् । सः भगवतः रामस्य महत्त्वं कथादिद्वारा बहुधा प्रतिपादयति स्म । जनानां भावना आसीत् यत् सः यस्मिन् गृहे पदं स्थापयति तत्र शुभं भविष्यति एव इति ।

गोपालः गुणपालः च कर्णाकर्णिकया एतत् ज्ञातवन्तौ । अतः तौ अङ्गदं गृहं प्रति निमन्त्रित-वन्तौ । तत्र आगतः अङ्गदः शय्याम् आश्रित-वन्तं धनपालं दृष्ट्वा अवदत् – ''रामविषये भवता अन्याय्यं कृतम् । तस्मात् भवतः एषा दशा'' इति ।

धनपालः दैन्येन अङ्गदम् अवदत् – ''मम ज्येष्ठः पुत्रः नास्तिकः । तस्मै योग्यस्य संस्कारस्य दाने अहम् असमर्थः जातः । अतः एतस्य उत्तरदायी अहमेव । एतस्य परिहाराय मया किं करणीयम् इति वदतु'' इति ।

''भवता पुत्राणां सम्पत्तिः तेभ्यः एव अदत्त्वा स्वयं व्ययीकृता । तस्मात् भगवान् रामः असन्तुष्टः अस्ति । भवान् सम्पत्तिं नाशयन् अस्तीत्यतः भवतः ज्येष्ठः पुत्रः नास्तिकः जातः, कृपणश्च संवृत्तः । किम् एतत्सर्वम् अवगतं भवता ?'' इति अपृच्छत् अङ्गदः ।

तदा गुणपालः अवदत् – ''महोदय ! मम पिता पुण्यकार्याणां निमित्तं धनव्ययं कृतवान् । तथापि तेन कष्टम् अनुभूतम् । मम अग्रजः तु नास्तिकः । तथापि कोट्यधिपतिः जातः, वैभवजीवनं यापयति च । किम् एतत् न्याय्यम् ?'' इति ।

तदा अङ्गदः तस्य स्कन्धे हस्तं संस्थाप्य अवदत् – ''भवतः अग्रजः नास्तिकः स्यात्, किन्तु तेन देवनिन्दनं तु न कृतम् । कृपणः स्यात् सः, तथापि अपात्रे तेनदानं न कृतम् । अतः एव सर्वेषां पुण्यस्य फलं प्राप्नुवन् सुखेन जीवति सः'' इति ।

तावता सुरुचिः अवदत् – ''अग्रे अस्माभिः कथं व्यवहरणीयम् इति सूचयतु । मम पत्युः स्वास्थ्यप्राप्त्यर्थं किं करणीयम् इति वदतु'' इति ।

''वज्रभस्म सेवितं चेत् भवत्याः पत्युः स्वास्थ्यं यथापूर्वं भवेत् । किन्तु तदर्थं लक्षं रूप्यकाणि व्ययीकरणीयानि'' इति अवदत्

अङ्गदः ।

एतत् श्रुत्वा गोपालः, गुणपालः, सुरुचिः च आश्चर्येण स्तब्धाः । तावतः धनस्य व्ययीकरणं स्वप्ने अपि असाध्यम् आसीत् ।

तेषां भावम् अवगत्य अङ्गदः अवदत् - "धनं व्ययीकर्तुं न शक्येत चेत् अपरः कश्चन उपायः आश्रयितुं शक्यः । भवत्सु कोऽपि भगवति पूर्णतः विश्वस्य धनपालस्य स्वास्थ्य-लाभं प्रार्थयेत् समग्रां काञ्चित् रात्रिं राममन्दिरे एव यापयन् । एतस्मात् अपि धनपालः स्वस्थः भवेत् । भवत्सु कश्चित्, ग्रामीणेषु कश्चित् वा एवं प्रार्थनां कर्तुम् अर्हति" इति ।

एतदनुगुणं गोपालः, गुणपालः च रात्रौ राममन्दिरे स्थित्वा प्रार्थनां कृतवन्तौ । सुरुच्या अपि अनन्तरदिने प्रार्थना कृता । तथापि कोऽपि लाभः न जातः । ग्रामीणैः बहुभिः एवमेव प्रार्थना कृता । तथापि धनपालेन तु स्वास्थ्यं न प्राप्तम् ।

एतदवसरे श्रीपालः अङ्गदं दृष्ट्वा अवदत् - "आर्य ! पितुः विषये मम विशेषादरः अस्ति । अहं भवते लक्षं रूप्यकाणि दास्यामि । कृपया वज्रभस्म सज्जीकृत्य तं स्वस्थं करोतु" इति ।

तदा अङ्गदः हसन् अवदत् - "भवान् तु कृपणः अस्ति । हृत्पूर्वकं धनं दत्तं चेदेव वज्रभस्म कार्यं करिष्यति । अतः भवान् रात्रौ राममन्दिरं गत्वा भगवति पूर्णविश्वासं कृत्वा प्रार्थनां करोतु । तस्मात् भवतः पिता स्वस्थः भविष्यति" इति ।

श्रीपालः एतत् अङ्गीकृतवान् । किन्तु ग्रामजनाः अवदन् यत् नास्तिकः सः अस्माकं मन्दिरं न प्रविशेत् इति । रात्रौ ते मन्दिरस्य द्वारं पिहितवन्तः अपि ।



श्रीपालः मन्दिरस्य पुरतः एव स्थित्वा प्रार्थनां कृतवान् - ''हे राम ! श्रूयते यत् पितृवाक्यपरिपालनाय भवता राज्यं त्यक्त्वा अरण्यं प्रति गतम् इति । यदि एतत् सत्यं स्यात् तर्हि पितुः स्वास्थ्यस्य निमित्तं प्रार्थनां कर्तुं मह्यम् अवसरं ददातु'' इति ।

अनन्तरक्षणे मन्दिरस्य द्वारं स्वयम् एव उद्घाटितं जातम् । श्रीपालः अन्तः गत्वा मूर्तेः पुरतः उपविश्य प्रार्थनां कृतवान् ।

एतस्मिन् एव काले धनपालः स्वस्थः जातः । सः सकुटुम्बं मन्दिरम् आगत्य श्रीपालं प्रीत्या आलिङ्गितवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! भगवद्भक्तः सम्पत्तिहीनः जातः, नास्तिकः श्रीपालः कोट्यधिपतिः अभवत् । किम् एतत् विलक्षणं न ? धनपालस्य पत्नी, उभौ पुत्रौ च प्रार्थनां कृतवन्तौ । तथापि धनपालः किमर्थं स्वस्थः न जातः ? नास्तिकः श्रीपालः यदा प्रार्थितवान् तदा धनपालः स्वस्थ्यलाभं यत् प्राप्तवान् तत् किम् अस्वाभाविकं न ? मम एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

त्रिविक्रमः वेतालस्य प्रश्नानाम् उत्तररूपेण अवदत् - ''दैवभक्तेः आर्थिकसुस्थितेः च न कोऽपि सम्बन्धः । पूर्वजन्मनः कर्म एव एतस्य वास्तविकं कारणम् । कष्टकारणतः धनपालस्य पत्नीपुत्रेषु भगवद्विषयकः विश्वासः अपगतः । अतः एव तेषां प्रार्थना न फलिता । पितुः व्यवहारं पश्यतः श्रीपालस्य मनसि भावना आसीत् यत् भगवद्भक्तिः धनव्ययकारिणी इति । अतः एव दैवभक्तिहीनः जातः सः । सः पितरं विशेषतः इच्छति स्म, तम् आदरेण पश्यति स्म अपि । अतः एव वज्रचूर्णनिर्माणाय लक्षं रूप्यकाणि दातुं सज्जः जातः सः । यस्य चित्तशुद्धिः भवति, यश्च सत्कार्याय सन्नद्धः भवति तस्मिन् भगवान् प्रसीदति । श्रीपालस्य विषये एतदेव प्रवृत्तम्'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# त्यागमूर्तेः महामस्तकाभिषेकः

कर्णाटके हासनजनपदे स्थिताः सर्वे मार्गाः प्रायः श्रवणबेळ - गोळाभिमुखाः भविष्यन्ति फेब्रवरीमासस्य द्वितीये सप्ताहे । तस्य मासस्य अष्टमदिनाङ्कात् नवदशदिनाङ्कपर्यन्तं गोम्मटेश्वरनाम्ना ख्यातस्य बाहुबलिनः महामस्तकाभिषेकः प्रचलिष्यति । एषः उत्सवः प्रतिद्वादशवर्षं प्रचलति । सर्वे जैनमतावलम्बिनः एतम् उत्सवम् औत्सुक्येन प्रतीक्षन्ते सदापि । जगतः नानाकोणेभ्यः ३०,००,००० अधिकाः जनाः एतस्मिन् मस्तकाभिषेकोत्सवे भागं गृह्णीयुः इति निरीक्ष्यते । ५७ पादोन्नतस्य (१७.५ मी.) अद्वितीयस्य अखण्डशिलानिर्मितस्य बाहुबलिनः मूर्तेः मस्तकाभिषेकः जगति एव सुविख्यातः ।

चतुर्विंशतितमेन (२४) तीर्थङ्करेण वर्धमानमहावीरेण जैनमतस्य प्रसारः महता प्रमाणेन कृतः । आदिनाथः ऋषभदेवः प्रथमः तीर्थङ्करः । सः आसीत् कश्चन राजा । सः राज्यं परित्यक्तुम् ऐच्छत् । अतः सः राज्यं द्विधा विभज्य एकं भागं ज्येष्ठपुत्राय भरताय, अपरं भागं कनिष्ठाय पुत्राय बाहुबलिने च अर्पितवान् । भरतस्य चक्रवर्तित्वं न अनुमतं बाहुबलिना । यद्यपि तयोः मन्त्रिणः युद्धम् एव उचितं भावितवन्तः, तथापि तौ सहोदरौ निर्णीतवन्तौ यत् मल्लयुद्धमात्रेण एव शक्तिमत्त्वं निश्चेतव्यम् इति । एतस्मिन् युद्धे जयं प्राप्तवान् अपि बाहुबली राज्यं न ऐच्छत् । साम्राज्यं परित्यज्य सः विविक्ते देशे अन्नं जलं वापि असेवमानः तपः आचरत् । अचिरात् एव सः निर्वाणं प्राप्तवान् ।

बहूनां वर्षाणाम् अनन्तरं, तन्नाम दशमे शतके, चामुण्डरायः गङ्गवंशीयस्य द्वितीयस्य राचमल्लस्य मन्त्री जातः । यत्र बाहुबली निर्वाणं प्राप्तवान् तं पौदनपुरप्रदेशं प्रति सः कदाचित् मातरं नीतवान् । मातापुत्रयोः स्वप्ने भगवती कुष्माण्डिनीदेवी प्रत्यक्षीभूय आज्ञापितवती यत् चन्द्रगिरौ स्थित्वा दक्षिणभागस्थम् इन्द्रगिरिं प्रति बाणः कश्चन प्रयोक्तव्यः इति । अनन्तरदिने चामुण्डरायः सुवर्णमयं बाणम् इन्द्रगिरिं लक्ष्यीकृत्य प्रयुक्तवान् ।

तदा तेन बाहुबलिनः मूर्तिः तत्र अक्षिसात्कृता । ततः सः तत्रत्यायां शिलायां बाहुबलिनः मूर्तेः उत्कृन्तनम् अकारयत् । बहूनां शिल्पिनाम् अविरतेन परिश्रमेण मूर्तिनिर्माणं समाप्तिम् अगात् । ९८१ तमे क्रिस्ताब्दे मार्चमासस्य १३ दिनाङ्के चामुण्डरायः प्रथमं मस्तकाभिषेकं निर्वर्तितवान् । सः 'गोम्मट' शब्देन निर्दिश्यते स्म । गोम्मटपदस्य अर्थः 'सुन्दरः' इति । गोम्मटस्य आराध्यदेवः गोम्मटेश्वरः इति नाम प्राप्नोत् ।

मस्तकाभिषेकावसरे भारतस्य प्रमुखाणां नदीनां जलैः, नारिकेलीयेन बालाम्बुना, इक्षुरसेन, मधुना, क्षीरेण, हरिद्राजलेन, श्रीगन्धरसेन, पुष्पैः च अभिषेकः क्रियते ।



# महाराष्ट्रीया जानपदकथा

## क्षीरसमर्पणे अपूर्वा घटना



बहोः कालात् पूर्वं बिजयादित्यः नाम कश्चन महाशिवभक्तः राजा निवसति स्म । सः कदाचित् एकं शिवमन्दिरं निर्मापितवान् । भगवतः अर्चनं नूतनेन क्रमेण करणीयम् इति तस्य चिन्तनम् आसीत् ।

कदाचित् सः अचिन्तयत् - 'पवित्रः श्रावणमासः आसन्नः अस्ति । श्रावणमासे सोमवासरे शिवस्य पूजनं महापुण्यप्रदम् इति पुराणेषु श्रूयते । यतः तत् दिनं शिवस्य परम-प्रियम् । अतः तस्मिन् दिने विशिष्टेन क्रमेण शिवस्य पूजा करणीया । स च विशिष्टः क्रमः कः भवितुम् अर्हति ?' इति ।

बहुधा चिन्तनस्य अनन्तरं तस्य मनसि कश्चन विचारः स्फुरितः - 'एतस्मिन् मासे प्रतिसोमवासरे अष्टोत्तरसहस्रेण क्षीरघटैः भगवतः अभिषेकः कुतो न निर्वर्तनीयः ?' इति ।

'राजधान्यां निवसन्तः सर्वेऽपि एतदर्थं क्षीरदानं कृत्वा पुण्यभाजः भवेयुः । जनैः यत् क्षीरं दीयते तत् एतदर्थम् एव निर्मिते महती कासारे सङ्ग्रहणीयम्' इति निर्णीतवान् सः ।

अनन्तरदिने एव राज्ञः दूतः कश्चन चतुष्पथे स्थित्वा डिण्डिमवादनपूर्वकम् उद्घोषितवान् - "भो भोः, शृण्वन्तु । सर्वे नगरवासिनः शृण्वन्तु । श्वः श्रावणमासस्य प्रथमः सोम-वासरः । अस्माकं राजा अष्टोत्तरसहस्रेण क्षीरघटैः भगवतः शिवस्य अभिषेकं निर्वर्तयितुम् इच्छति । अतः श्वः नगरवासिनः सर्वे गृहे स्थितं समग्रं क्षीरं स्वीकृत्य मन्दिरपार्श्वे निर्मिते कासारे अर्पयेयुः । गृहे स्थितं समग्रम् अपि क्षीरम् आनेतव्यं सर्वैः, येन कासारः अचिरात् एव पूर्णः स्यात् । एवं कृतं चेत् शिवः सन्तुष्यति, सर्वेऽपि भगवतः आशी-

र्वादस्य पात्राणि भविष्यन्ति'' इति ।

सर्वे जनाः चतुष्पथसमीपे सम्मिलिताः सन्तः एतत् उद्घोषणं श्रुतवन्तः । केचन एतम् अपूर्वं शिवार्चनक्रमं श्रुत्वा सन्तुष्टाः । किन्तु बहवः खिन्नाः एव । यतः गृहस्य समग्रं क्षीरम् एतदर्थम् अर्पणीयम् आसीत् तैः । तत् तु सम्मतं न आसीत् तेषाम् । तथापि राजाज्ञां विरोद्धुम् अशक्नुवद्भिः तैः विना प्रतिवचनं ततः निर्गतम् ।

अनन्तरदिने प्रातः एव जनाः क्षीरपात्र-सहिततया मन्दिरं गतवन्तः । क्षीरम् अर्पयितुम् आगतानां महती पङ्क्तिः एव निर्मिता । सर्वैः अपि तर्णकाय अपि क्षीरम् अदत्त्वा समग्रम् अपि क्षीरम् अर्पणाय आनीतम् आसीत् ।

सामान्येषु दिनेषु वृद्धाः, अस्वस्थाः, बालाः च प्रतिगृहं क्षीरं सेवन्ते स्म । किन्तु तस्मिन् दिने तु तादृशः कोऽपि अल्पम् अपि क्षीरं न प्राप्तवान् । यतः राजाज्ञा तादृशी आसीत् खलु ?

एकैकस्मात् अपि समग्रं क्षीरम् आनीतम् आसीत् इत्यतः नवनिर्मिते कासारे क्षीरसङ्ग्रहः वर्धमानः जातः । किन्तु मध्याह्नकालः आसन्नः चेदपि कासारस्य अर्धभागमात्रम् एव क्षीरेण पूर्णं दृश्यते स्म । वस्तुतः तु यावत् क्षीरं तत्र अर्पितं तस्य परिमाणं परिगण्येत चेत् एतावता कासारः क्षीरेण पूर्णः भवेत् एव ।

एतत् लक्षितवन्तः अर्चकादयः जनाः च नितराम् आश्चर्यचकिताः । किमर्थम् एवम् इति केनापि न ज्ञातम् । एषा वार्ता नगरे सर्वत्र प्रसृता । एतत् कौतुकं द्रष्टुं जनाः तत्र सम्मिलिताः । कश्चित् अवदत् – ''नगरवासिभिः सर्वैः समग्रं क्षीरम् अर्पितं चेदपि कासारः न पूर्णः इति तु महते आश्चर्याय । प्रायः भगवान् शिवः अस्मासु असन्तुष्टः स्यात् । नगरवासिभिः अस्माभिः अज्ञाततया किमपि पापम् आचरितं स्यात्'' इति ।

जनेषु एवं परस्परं वार्तालापं कुर्वत्सु काचित् वृद्धा मन्दिरसमीपम् आगता । तस्याः आगमनं केनापि न लक्षितम् एव । सा प्रातः एव उत्थाय गोदोहनं कृतवती आसीत् । दोहनावसरे ऊधसि किञ्चित् क्षीरं तर्णकाय अवशेषितवती आसीत् अपि । ततः गृहजनेभ्यः क्षीरं दत्त्वा गृहकृत्यानि सर्वाणि समापितवती सा । एतस्य सर्वस्य अनन्तरं यत् क्षीरम् अवशिष्टं तत् आनीय क्षीर-कासारे भक्त्या अर्पयन्ती सा शिवम् उद्दिश्य मनसि एव अवदत् – ''भगवन् ! एतावत् एव





क्षीरम् अर्पयितुं शक्तं मया । यत् अर्पयामि तत् तु भक्त्या अर्पयन्ती अस्मि । कृपया एतत् स्वीकृत्य प्रसीद'' इति ।

यावत् तया अर्पितं क्षीरं कासारे पतितं तावता झटिति कासारः पूर्णः जातः । अनन्तरं सा यथा आगतं तथैव विना शब्दं ततः प्रतिगतवती ।

क्षीरकासारं पूर्णं दृष्ट्वा राजा, अर्चकः, अन्ये जनाः च सन्तुष्टाः । यथासङ्कल्पं पूजाविधयः प्रवृत्ताः ।

अनन्तरसोमवासरे अपि एवमेव प्रवृत्तम् । सर्वैः नगरवासिभिः विना लोपं समग्रं क्षीरम् अर्पितं चेदपि कासारस्य अर्धभागमात्रम् एव पूर्णम् आसीत् । तया वृद्धया यदा अल्पं क्षीरम् अर्पितं तदा कासारः झटिति पूर्णः । एतां घटनां दृष्ट्वा सर्वे आश्चर्यचकिताः । राज्ञा अपि एषा वार्ता दूतमुखात् ज्ञाता ।

राजा एतस्य मूलकारणं प्रत्यक्षं द्रष्टुम् इष्टवान् । अतः तृतीये सोमवासरे सः रक्षकभटवेषेण आगत्य कासारस्य पार्श्वे एव तिष्ठन् प्रवर्तमानं सर्वं जागरूकतया परिशीलितवान् ।

जनाः यथापूर्वं क्षीरम् आनीय अर्पितवन्तः । तथापि क्षीरपरिमाणम् अर्धभागसूचकरेखातः उपरि न गतम् ।

सा वृद्धा आगत्य अल्पपात्रमितं क्षीरं कासारे समर्पयन्ती उच्चैः अवदत् - ''भगवन् ! माम् आशीर्वादेन अनुगृह्णातु, येन भवति मम भक्तिः अक्षुण्णा भवेत्'' इति ।

एतावत् उक्त्वा यावत् सा प्रतिप्रस्थातुम् उद्युक्ता तावता क्षीरेण पूर्यमाणः कासारः राज्ञा दृष्टः । सः झटिति तस्याः वृद्धायाः पुरतः गत्वा अतिष्ठत् । एतत् दृष्ट्वा किञ्चिदिव भीता वृद्धा कम्पमानेन स्वरेण अपृच्छत् - ''किमर्थं मम अवरोधः क्रियते ? किम् अपराद्धं मया ?'' इति ।

तदा राजा अवदत् - ''अम्ब ! अलं भीत्या । अहमस्मि राजा । भवतीतः किञ्चित् ज्ञातुम् इच्छामि अहम् । बहवः कासारे क्षीरम् अर्पयन्ति चेदपि कासारः सर्वथा पूर्णः न भवति स्म । किन्तु भवती यदा अल्पम् अपि क्षीरम् अर्पयति तदा सः झटिति पूर्णः भवति । एतत् कथम् इति किं भवती विवरीतुम् अर्हेत् ?'' इति ।

वृद्धा अवदत् - ''महाराज ! अहमस्मि माता । माता कदापि पुत्राणां बुभुक्षां न सहते । अतः मया भवतः आज्ञा पूर्णतः न पालिता । दोहनसमये किञ्चित् क्षीरं गोवत्साय अवशेषितम् । पुत्रपौत्रादिभ्यः अपि क्षीरं दत्तम् । अवशिष्टं क्षीरम् एव अर्पणाय आनीतम् । भगवान् अपि माता इव । सः अपि स्वपुत्राणां बुभुक्षां न सहते । स्पष्टोक्त्यै अहं क्षन्तव्या महाराज ! गृहे स्थितं समग्रं क्षीरम् आनेतव्यम् इति भवता आज्ञा कृता । अतः गोवत्स-बाल-वृद्धास्वस्थादयः क्षीरं न प्राप्तवन्तः । एतत् जनानाम् असन्तोषाय भवति स्म । तथापि ते भवतः आज्ञां पालितवन्तः । अतः तैः क्षीरं तु अर्पितं, किन्तु न सन्तोषेण । एतत् लक्षितवान् भगवान् असन्तुष्टः । भवता अर्पितस्य क्षीरस्य अस्वीकारद्वारा सः स्वस्य असन्तोषं प्रकटितवान्'' इति ।

एतत् श्रुत्वा राजा अचिन्तयत् - 'एषा यत् वदति तत् युक्तम् एव । राजा अहं प्रजानां माता इव । तासाम् आरोग्यस्य आनन्दस्य च रक्षणं मम कर्तव्यम् । किन्तु अहं पूजायाः निमित्तं तेभ्यः बलात् समग्रं क्षीरं प्राप्तवान् । अतः एव भगवान् माम् आशीर्वादेन न अनुगृहीतवान् । निश्चयेन अपराधी अस्मि अहम्' इति । एवं चिन्तयन् सः पश्चात्तापेन दग्धः ।

सः वृद्धां कृतज्ञतापूर्वकं नमस्कुर्वन् उक्तवान् - ''अम्ब ! भवती मां बहुधा उपकृतवती । योग्यायाः भक्तेः मार्गं दर्शितवती भवती'' इति ।

ततः तस्मिन् एव दिने सः आज्ञां कारितवान् यत् गोवत्स-बाल-वृद्धास्वस्थेभ्यः दानस्य अनन्तरं यत् क्षीरम् अवशिष्यते तदेव अग्रिमे सोमवासरे भगवते अर्पणीयम् इति ।

अग्रिमः च सोमवासरः श्रावणस्य अन्तिमः सोमवासरः । यथापूर्वं क्षीरम् अर्पयितुम् आगतानां जनानां महती अनुपङ्क्तिः एव दृश्यते स्म प्रातः एव । उपयोगानन्तरं यत् अवशिष्टं तदेव क्षीरम् आनीतवन्तः आसन् जनाः । अतः मध्याह्नाभ्यन्तरे एव कासारः पूर्णः जातः आसीत् ।

तथापि राजा न सन्तुष्टः । यदा वृद्धा आगता तदा सः तया सह मन्दिरं प्रविष्टवान् । तया आनीतेन क्षीरेण एव भगवतः शिवस्य अभिषेकः आदौ कृतः । ततः अभिषेक-कार्यक्रमः अनुवृत्तः ।

''अम्ब ! भवत्याः कारणतः अद्य भगवान् सन्तुष्टः दृश्यते !'' इति कृतज्ञतापूर्वकं वृद्धाम् उक्तवान् राजा ।



# वार्ताविशेषः



## एवरेस्ट् शिखरम् आरूढं सैन्यमहिलाभिः

गते जूनमासे भारतीयसैन्यस्य चतस्रः महिलाः एवरेस्ट्शिखरम् आरोहन्त्यः नूतनं विक्रमं साधितवत्यः । महिलागणेन कृतम् अत्युन्नत-शिखरस्य प्रथमम् आरोहणम् एतत् । शिल्पा मुजुमदार (केप्टन्), अश्विनी पवार [illegible] त्सेरिङ्ग् लाडोल् (केडेट्), डेची ल्हामो (शि[illegible]धीना) च ८,८४८ मीटरुन्नतं शिखरं गतस्य जूनमासस्य [illegible]ये दिनाङ्के आरूढवत्यः चीनपार्श्वमार्गेण । मार्च्मासस्य अष्टादशे दिनाङ्के ताभिः प्रयासोऽयम् आर[illegible] आसीत् ।

## अपूर्वा प्रतिभा

वैष्णवी तिरुच्चिनगरीया । सा सङ्गणकविज्ञानस्य अध्ययनाय तन्त्रज्ञानविद्यालयं प्रविष्टवती अस्ति एषु दिनेषु । तस्याः वैशिष्ट्यं नाम तिरुक्कुरुळ्ग्रन्थः रामायणं च तस्याः कण्ठे एव अस्ति, तदुभयम् अपि सा स्मृतिबलात् लेखितुम् अर्हति अपि । किन्तु तया यत् लिख्यते तस्य पठनाय पठित्रा दर्पणसाहाय्यं स्वीकरणीयं भवति । यतः तया प्रतिबिम्बक्रमेण (Mirror Image) लिख्यते । सा तमिळुलिप्या आंग्ललिप्या च एतेन क्रमेण लेखितुं समर्था लीलया । तस्याः लेखनम् अपि दक्षिणतः वामदिशं प्रति । ए-४-आकारकं पत्रं दशभिः निमेषैः सा आंग्ललिप्या लेखनेन पूरयति । तमिळुलिप्या तु विंशत्या निमेषैः । वैशिष्ट्यं नाम प्रतिबिम्बक्रमेण लेखनाय सा वामहस्तम् उपयुङ्क्ते, सामान्यलेखनाय तु दक्षिणहस्तम् एव । विद्यालयं प्रति गमनात् पूर्वम् एव सा प्रतिबिम्बक्रमेण लिखति स्म । एतत् लक्षितवान् मातुलः चिन्तितवान् आसीत् यत् एषा उर्दूलिप्या लिखति प्रायः इति । विद्यालयस्य अध्यापकाः सामान्यलिप्या लेखनाय तां प्रोत्साहितवन्तः । ततः तया दक्षिणहस्तेन सामान्यलेखनम् अपि अभ्यस्तम् । सा प्रतिबिम्बक्रमस्य अभ्यासम् अपि अनुवर्तितवती । अद्यापि सा प्रतिबिम्बक्रमेण लेखनस्य अभ्यासाय घण्टात्मकं कालं यापयति ।




उम्मीद करता हूं कि आप लोगों को घर जाने की जल्दी नहीं होगी. मैं तुम्हें ये जगह घुमाऊंगा.
मुझे कोई जल्दी नहीं है


हां, वाकई तुम्हें कोई जल्दी नहीं है.
तुम कहना क्या चाहते हो?


हा, हा, कुछ नहीं. पर जी-मैन मेरी दुनिया को बचाने के अपने वादे को मत भूलना.
मैं कैसे भूलूंगा... पर शायद हम कॉफ़ी भूल गए हैं... एक कप कॉफ़ी प्लीज?

समाप्त

# बलात्कारमार्गेण भिक्षा

बुद्धपुरनामके लघुग्रामे नारायणः नाम भिक्षुकः वसति स्म । सः महावाचालः । सः यस्मिन् मार्गे भिक्षायाचनां करोति तस्मिन् मार्गे कश्चन कुसीदवणिक् निवसति स्म । नारायणस्य इच्छा आसीत् यत् वणिक्तः भिक्षारूपेण अधिकं धनं प्राप्तव्यम् इति ।

वणिजः गृहस्य पुरतः सदा कश्चन रक्षकः भवति स्म । नारायणः यदा अन्तः गमनाय उद्युक्तः भवति तदा सः तं तर्जयित्वा प्रेषयति स्म । केन उपायेन अन्तः गन्तव्यम् इति नारायणः बहुधा चिन्तितवान् । कदाचित् रक्षकः यदा अन्येन सह वार्तालापे मग्नः आसीत् तदा नारायणः झटिति अन्तः गत्वा धनिकम् उद्दिश्य उच्चैः अवदत् – ''महोदय ! भिक्षा दीयताम्'' इति ।

नारायणस्य अन्तः आगमनम् उच्चध्वनिं च श्रुत्वा सेवकाः तस्य प्रेषणाय प्रयत्नं कृतवन्तः । नारायणः निराकृतिं दर्शितवान् । सेवकाः तं तर्जितवन्तः । तदा तत्र कोलाहलः जातः । वणिक् अट्टात् अधः आगत्य कोलाहलस्य कारणं ज्ञात्वा नारायणाय पञ्च रूप्यकाणि दत्त्वा अवदत् – ''भवता भिक्षाप्राप्तये बलात्कारमार्गः आश्रितः । भिक्षायाचनस्य नायं क्रमः । यदि कोलाहलः न कृतः स्यात् तर्हि दश रूप्यकाणि प्राप्तानि अभविष्यन् भवता'' इति ।

नारायणः तेन दत्तं धनं स्यूते स्थापयन् – ''श्रीमन् ! एतावता एव भवतः सेवकैः ये प्रहाराः दत्ताः तेनैव अहम् उपकृतः अस्मि । वृद्धिस्वीकरणं भवतः वृत्तिः । सा कथं निर्वोढव्या इति मया न बोधितम् । मम तु भिक्षायाचनं वृत्तिः । मया भिक्षायाचनं कथं करणीयम् इति भवता बोधनीयं नास्ति'' इति उक्त्वा ततः निर्गतवान् ।





# कथास्पर्धायाः फलितांशः

## यानभाटकदानं व्यर्थम् (जून्)



पित्रा यदा तृतीयं यानम् अपि प्रेषितं तदा पुत्रः आश्चर्येण अपृच्छत् - "तात ! आगतानि सर्वाणि यानानि भवान् एवं तिरस्करोति चेत् नगरं प्रति गमनम् अद्य कथं शक्येत ?" इति ।

"वत्स ! यानारोहणात् ऋते आवयोः अन्या गतिः नास्ति, आवां श्रान्तौ स्वः च इति विचिन्त्य एते यानचालकाः अधिकं भाटकम् अपेक्षमाणाः दृश्यन्ते । अधिकभाटकदानं निराकुर्वद्भ्याम् अन्यस्य यानस्य प्रतीक्षां कुर्वद्भ्याम् आवाभ्याम् एकत्र न स्थितम् । मन्दं गच्छन्तौ आवाम् अर्धदूरम् अतिक्रान्तवन्तौ स्वः एव । इतःपरं नगरप्राप्तिः न महते क्लेशाय । पादाभ्यां गमनेन आरोग्यस्य वृद्धिः भविष्यति, धनस्य सञ्चयः अपि भविष्यति । अतः पादाभ्यां गमनम् एव श्रेयसे" इति वदन् अग्रे प्रस्थितवान् महाकृपणः ।

***- ओंगिराल अनिरुद्धकृष्ण, नेल्लूरु - ५२४००२ (आ.प्र.)***



## 'अथ किम् ?' (जुलै)

गृहं प्रति गमनानन्तरं परमशिवः अविलम्बेन ज्ञातवान् यत् 'अथ किम् ?' इत्येतावन्मात्रम् एव शुकः वक्तुं समर्थः, नान्यत् किमपि इति ।

सप्ताहानन्तरं सः शुकेन सह तत् स्थलं गतवान्, यत्र शुकः पूर्वं क्रीतः आसीत् । शुकविक्रेतुः समीपं गत्वा सः अवदत् - "गते सप्ताहे शुकक्रयणावसरे मया शतं रूप्यकाणि दत्तानि आसन् । परीवर्ताभावात् भवता पञ्चाशत् रूप्यकाणि तदा न दत्तानि । अतः तानि इदानीं ददातु" इति ।

विस्मयं प्राप्तवान् सः शुकविक्रेता कलहम् आरब्धवान् । तयोः कलहं श्रुत्वा बहवः तत्र सम्मिलिताः । कलहस्य कारणं पृष्टवन्तः ते । "एतेन मह्यं पञ्चाशत् रूप्यकाणि दातव्यानि सन्ति । एषः शुकः एव अत्र प्रमाणम् । भवन्तः शुकम् एतं प्रश्नं पृष्ट्वा मम वचनस्य तथ्यताम् अवगन्तुम् अर्हन्ति" इति ।

तदा जनाः शुकम् अपृच्छन् - "किं शुकविक्रेत्रा पञ्चाशत् रूप्यकाणि दातव्यानि सन्ति ?" इति । झटिति शुकः अवदत् - "अथ किम् ?" इति । एतत् श्रुत्वा जनैः निर्णीतं यत् वणिजा तावत् धनं दातव्यम् इति । 'वञ्चकेन यः क्रमः आश्रितः तेनैव क्रमेण मया सः वञ्चितः' इति चिन्तयन् परमशिवः धनं प्राप्य ततः प्रस्थितवान् ।

***- एम्. अनूषा, हैदराबाद (आ.प्र.)***

# चिताः कथापूर्तयः

## विदूषकस्य विवरणम् (अगस्ट्)



“गाम्भीर्येण एव वदन् अस्मि महाराज ।” इति उक्त्वा विदूषकः स्वस्य कथनस्य आशयं विवृतवान् –

“मनः महता वेगेन सञ्चरति इति भवान् जानाति एव । तत् वेगेन सर्वान् प्राणिनः अपि अतिशेते । वायोः वेगात् अपि तस्य वेगः अधिकः । अतः महावेगेन युक्तस्य मनसः आश्रयभूतः मानवः महावेगयुक्तः सहजतया इति निर्देष्टुं योग्यः एव खलु ? अन्येषां मनः यावता वेगेन सञ्चरति ततोऽपि अधिकेन वेगेन सञ्चरति मम मनः । सर्वेषां भावं परिशील्य तत् मां सर्वं निवेदयति । अतः अहं विनोदरसिकान् भवादृशान् सभासदः च रञ्जयामि । अतः सिद्धं यत् अधिकवेगयुक्तः अहमेव इति” इति ।

विदूषकस्य विवरणेन सन्तुष्टः राजा तस्मै पारितोषिकं दत्त्वा तं पुरस्कृतवान् ।

*– आर्. सायिविजयकृष्णः, हैदराबाद (आ.प्र.)*

## उन्मत्तचिकित्सालये.. (अगस्ट्)

भीतः गोपालः झटिति उत्थाय धावितवान् । पुरतः एव उन्नयिनी तेन दृष्टा । सः तां प्रविष्टवान् । द्वितीयः अट्टः यदा प्राप्तः तदा उन्नयिनी स्थगिता । द्वारम् उद्घाटितम् । यः स्वागतप्रकोष्ठे सम्भाषणं कृतवान् सः एव आगच्छन् दृष्टः तेन । महता प्रयासेन तस्य प्रवेशं निवारितवान् गोपालः । एतत् दृष्ट्वा तत्रैव स्थिताः अनुवैद्याः तम् अपृच्छन् – “किमर्थम् एवं व्यवह्रियते ? किम् अभवत् ?” इति ।

“एषः पृच्छति – पादरक्षा कथिता इष्यते उत मृष्टा इति” इति अवदत् गोपालः । उन्नयिनी अग्रे गता । अग्रिमे अट्टे यदा उन्नयिन्याः द्वारम् उद्घाटितं तदा काचित् अनुवैद्या आगत्य तस्य हस्तं गृहीत्वा प्रकोष्ठं नीतवती । गोपालः प्रकोष्ठस्य पुरतः स्थितं फलकं दृष्टवान् । तत्र लिखितम् आसीत् 'डाक्टर्' इति ।

*– प्रियदर्शन जे.बाबु, मुम्बयी – ४०० ०१२*

# पराजितोऽपि अपराजितः

भारतीये इतिहासे क्रि.पू ३२६ तमं वर्षम् अतीवमहत्त्वपूर्णम् । अलेक्साण्डर् ग्रेट् (क्रि.पू ३५३ - ३२३) इति ख्यातः ग्रीक्-चक्रवर्ती तस्मिन् वर्षे भारतम् आक्रान्तुं ससैन्यम् आगतवान् । तक्षशिलायाः राजा अम्भिः तम् अतिथित्वेन स्वागतीकृतवान् यदि न स्यात् तर्हि प्रायः सः भरतभूमौ पदं स्थापयितुं न अशक्ष्यत् । अम्भिः कश्चन महत्त्वाकाङ्क्षी जनः । नूतनानां स्नेहस्य सम्पादने समुत्सुकी । प्रतिवेशी राजा पुरुः जेतव्यः इति तस्य प्रबला इच्छा । पुरुः तु झेलंनदीपरिसरप्रदेशं न्याय्येन मार्गेण परिपालयति स्म । तदीये शासने जनाः शान्त्या निवसन्ति स्म ।



अम्भिः बहून् राज्ञः स्वस्य आस्थानं प्रति निमन्त्रितवान् शक्तिशालिने आक्रामकाय राजदेयं दातव्यम् इति संसूच्य । बहवः लघुदेशशासकाः एतत् निमन्त्रणम् अङ्गीकृत्य आक्रामकस्य पदतले धनम् अर्पितवन्तः अपि । किन्तु अभिमानधनः पुरुः तु एतस्य विरोधं कृतवान् ।

तेषु दिनेषु भारतीयाः राजानः गजान् प्रशिक्ष्य युद्धे उपयुञ्जते स्म । ग्रीकाः तु न जानन्ति स्म यत् महाकारकाः गजाः कथं प्रशिक्षणीयाः, युद्धे च कथम् उपयोक्तव्याः इति । एतां प्रशिक्षणकलां तान् अम्भिः एव बोधितवान् ।

पुरोः अविधेयताम् असहमानः अलेक्साण्डरः झेलम्नदीतीरपर्यन्तं गतवान् ससैन्यम् । नदी जलेन पूर्णा आसीत् । तस्याः क्रमणं सरलं न आसीत् । अलेक्साण्डरस्य सैन्यं

नौकया नदीक्रमणाय उद्युक्ता । पुरोः सैनिकाः ताः नौकाः नाशितवन्तः । एतस्मिन् प्रयत्ने यद्यपि असङ्ख्याः सैनिकाः प्राणैः वियुक्ताः जाताः, तथापि अलेक्साण्डरः तत् न परिगणितवान् । वस्तुतः तु तस्य युद्धस्य किञ्चन तन्त्रम् आसीत् तत् । यदा पुरोः सैनिकाः अलेक्साण्डरस्य नौकानां नाशने एव दत्तावधानाः आसन् तदा अम्बेः सैनिकाः अल्पगभीरतायुक्तं स्थलम् अन्विष्य पादाभ्यां नदीक्रमणे निरताः आसन् । एषः प्रयासः पुरुणा न लक्षितः एव ।

नदीं क्रान्तवतः अलेक्साण्डरस्य पुरोः च सैन्ययोः महत् युद्धं प्रवृत्तम् । समग्रं दिनं यावत् अनुवृत्तं तत् युद्धम् । वस्तुतः तत् समानयोः युद्धं न आसीत् । पुरोः सैन्यं विंशतिसहस्र-सैनिकमितम् । अम्बि-अलेक्साण्डरयोः तु अतुलं सैन्यम् । अतः एतस्मिन् युद्धे पुरोः सर्वे सैनिकाः प्राणैः वियुक्ताः जाताः । सूर्यास्तसमये रणरङ्गे अश्वारूढः पुरुः एकः एव अवशिष्टः शत्रून् धैर्येण सम्मुखीकुर्वन् । अलेक्साण्डरः एतत् दृष्ट्वा आश्चर्यचकितः ।

अम्बिः उच्चस्वरेण तं बोधितवान् - ''असहायः अस्ति भवान् । अतः शरणं गच्छतु'' इति । एतत् श्रुत्वा क्रुद्धः पुरुः उच्चैः अवदत् - ''अये भीरो ! राष्ट्रद्रोहिन् ! अपसरतु मम दृष्टिपथात्'' इति । अम्बिः लज्जया ततः निर्गतवान् । पुरुः नितरां व्रणितः आसीत् । नवाधिकस्थलेभ्यः रक्तं स्रवति स्म । तथापि सः अल्पाम् अपि धैर्यच्युतिं न दर्शितवान् ।

अलेक्साण्डरस्य सैनिकाः तम् आक्रम्य बद्धवन्तः, अलेक्साण्डरस्य समीपं नीतवन्तः च । 'दयनीयां दशां प्राप्तवन्तं शत्रुराजं दृष्ट्वा अलेक्साण्डरः अट्टहासं कुर्यात्, तस्य शिरश्छेदं वा कारयेत्' इति चिन्तनम् आसीत् तेषाम् । यतः ते तस्य क्रूरतां जानन्ति स्म ।

पूर्वं कदाचित् तदीयः सुहृत् अस्वस्थः जातः आसीत् । तदा तं परीक्षितवन्तः वैद्याः अवदन्



यत् हिमखण्डमिश्रितं मद्यं न सेवनीयं, मांसम् अपि परिवर्जनीयम् इति । किन्तु अस्वस्थः सः सुहृत् वैद्यानाम् आदेशम् उपेक्ष्य अपथ्यं सर्वं सेवितवान्, प्राणैः वियुक्तः जातः च । एतत् दृष्ट्वा नितरां क्रुद्धः अलेक्साण्डरः चिकित्सां कृतवतां सर्वेषां वैद्यानां, तस्मिन्



एवं पराजितः न अभविष्यत् इति ।

"पुरुवर्य ! युद्धं तु समाप्तम् । भवान् इदानीं मम बन्दी । मया इदानीं कथं व्यवहरणीयम् इति अभिप्रैति भवान् ?" इति हसन् पृष्टवान् अलेक्साण्डरः ।

"अलेक्साण्डरवर्य ! समर्थः योद्धा सर्वदापि अन्येन समर्थेन योद्धा सह समानतया व्यवहरेत्" इति गाम्भीर्येण अवदत् पुरुः ।

"भवतु ! अहं भवता सह समानतया व्यवहरिष्यामि । किम् अन्या कापि अपेक्षा अस्ति भवतः ?" इति पृष्टवान् अलेक्साण्डरः ।

"समानः व्यवहारः यदि भवता क्रियेत तर्हि मम अपेक्षाः सर्वाः पूरिताः इव । अन्या कापि अपेक्षा नास्ति मम" इति अवदत् पुरुः ।

ग्रामे निवसतां सर्वेषां जनानां च शिरश्छेदम् कारितवान् आसीत् सः । एतादृशानि बहूनि नृशंसकृत्यानि कारितवान् आसीत् सः इतः पूर्वम् ।

पर्शियादेशे युद्धावसरे अलेक्साण्डरः बहून् समर्थान् राज्ञः दृष्टवान् आसीत् । किन्तु पुरु-सदृशः तु तेन इतः पूर्वं न दृष्टः एव आसीत्, यश्च एकाकी सन् अपि रणरङ्गे युद्धं कृतवान् ।

कारागारं गतः अलेक्साण्डरः पुरुं सकृत् साभिमानं दृष्टवान् । सः जानाति स्म यत् अम्भिः द्रोहं यदि न कृतवान् स्यात् तर्हि पुरुः

अलेक्साण्डरः पुरोः वचनैः सन्तुष्टः जातः । अतः सः पुरोः राज्यं न स्वायत्ती-कृतवान् । पुरुं सगौरवं विमुक्तवान् सः ।

एतस्य प्रतिस्पन्दरूपेण पुरुणा अपि अलेक्सण्डरविषये आदरपूर्णः मैत्रीमयः एव व्यवहारः कृतः इति पुनः वक्तव्यं नास्ति खलु ? धैर्यं, गौरवपूर्णः व्यवहारः च शत्रोः हृदये अपि महत् परिवर्तनं कर्तुम् अर्हति इत्यस्य प्रत्यक्षम् उदाहरणम् अस्ति एषा घटना ।

राजा पुरुः अलेक्साण्डरः च परस्पर-व्यवहारेण सन्तुष्टौ आस्ताम् । किन्तु अम्भिः तु जीवते महत् खेदं प्राप्तवान् ।

# चन्दमामाप्रश्नावली - 9

**यः समुचितम् उत्तरं दास्यति सः अर्हति रू. २५०/ - पारितोषिकत्वेन***

एतस्मात् मासात् आरभ्य आसक्तिवर्धिका प्रश्नावली उपस्थाप्यते अस्माभिः वाचकानां विनोदाय । अत्र ये प्रश्नाः भवन्ति तेषाम् उत्तराणि गतवर्षस्य (२००५) द्वादशसु सञ्चिकासु शीर्षकेषु कथासु वा सन्ति । यत् पठितं तस्य स्मरणतः उत्तरम् अविलम्बेन प्राप्यते । यदि न स्मर्येत तर्हि गतस्य वर्षस्य द्वादश अङ्कान् पुरतः संस्थाप्य पृष्ठेषु परिशील्य उत्तरं प्राप्यतां लीलया । आं, लीलाविषयः एव अस्ति अयम् ।

** एकाधिकजनाः यदि समुचितम् उत्तरं प्रेषयेयुः तर्हि तेषु पञ्च जनान् यादृच्छिकतया चित्वा तेषु पारितोषिकधनं वितीर्यते ।*

**भवद्भिः एवं कर्तव्यम्** - १. उत्तराणि लेखनीयानि । २. नाम, वयः, (ऊनषोडशवर्षीयाः एव अत्र भागं वोढुम् अर्हाः) सङ्केतं (पिन्कोड्सहितं) च प्रेषयन्तु । ३. ग्राहकता अस्ति चेत् ग्राहकसङ्ख्या अपि लेखनीया । ४. पिहितपत्रस्य उपरि **चन्दमामाप्रश्नावली - १** इति लेखनीयम् । ५. फेब्रवरीसमाप्तितः पूर्वम् उत्तराणि अस्माभिः प्राप्तव्यानि । ६. एप्रिल्मासे परिणामः प्रकाशयिष्यते ।

१. अस्माकं देशस्य तत् सुप्रसिद्धं रेल्वेस्थानकं किं, यच्च विश्वस्तरीयां मान्यतां प्राप्तवत् अस्ति ?

२. उलूकः अन्धकारप्रियः । भवान् अज्ञानेन जीवनं यापयति । अज्ञानम् एव अन्धकारः । अतः उलूकः भवन्तम् आश्रितवान्'' - एतानि वाक्यानि कस्यां कथायां सन्ति ?

३. ३५० वर्षेभ्यः पूर्वम् अस्माकं देशस्य सुप्रसिद्धं स्मारकं निर्मितं जातम् । तत् किम् ?

४. केरलीया का युद्धकला जुडो-कराटे-कुङ्ग्फूप्रभृतीनां युद्धकलानाम् आविर्भावाय साहाय्यम् अकरोत् ?

५. ''यस्मिन् गृहे वासः क्रियते तत् स्वीयं मत्त्वा, येषां मध्ये वासः क्रियते तान् स्वीयान् भावयित्वा समर्पणभावनया परिश्रमं ये कुर्वन्ति तेषां वचनानि एव फलदायीनि भवन्ति'' इत्येतत् सत्यं काचित् मनोहरी कथा ज्ञापयति । तस्याः कथायाः शीर्षकं किम् ?

६. एतत् चित्रं कस्याः कथायाः ?





# याचना

प्राचीने काले राजा ब्रह्मदत्तः काशीनगरं परिपालयति स्म । तेषु दिनेषु बोधिसत्त्वः कस्मिंश्चित् ग्रामे ब्राह्मणकुले जन्म प्राप्तवान् । तस्य नाम आसीत् सोमदत्तः इति । तस्य पिता नितरां निर्धनः आसीत् । अल्पे कृषिक्षेत्रे श्रमेण कार्यं कुर्वन् कथञ्चित् कुटुम्बजनान् पोषयति स्म सः ।

प्राप्तवयस्कतां गतः सोमदत्तः पितुः परिश्रमपूर्णं जीवनं दृष्ट्वा नितरां खिन्नः जातः । सः मातापितरौ सुखिनौ कर्तुं कञ्चित् उपायं चिन्तितवान् ।

'मया कथमपि विद्याभ्यासं कृत्वा गृहजनानां साहाय्यं करणीयम् । कृषौ पितुः साहाय्यकरणं शक्यम् । किन्तु तेन महान् आयः न प्राप्येत । ततः दारिद्र्यस्थितेः परिवर्तनं क्लेशाय एव । तस्मात् विद्याभ्यासः एव उत्तमः परिहारः' इति चिन्तयित्वा सः पितरम् अवदत् - ''तात ! अहं तक्षशिलां गत्वा विद्याभ्यासं कर्तुम् इच्छामि'' इति ।

पिता एतत् अनुमतवान् । अनन्तरं सोमदत्तः तक्षशिलां गतवान् । गुरुशुश्रूषां कृत्वा सः कस्माच्चित् आचार्यात् विद्याम् अधिगृहीतवान् । विद्याभ्यासं समाप्य गृहं प्रत्यागतवान् अपि सः ।

पिता तु यथापूर्वं वृषभयोः साहाय्येन कृषिकार्यं निर्वहन् आसीत् । इतःपरम् अपि विलम्बः न करणीयः इति विचिन्त्य सोमदत्तः काशीं गतवान्, राज्ञः आस्थाने कञ्चित् उद्योगं प्राप्तवान् च ।

कानिचन दिनानि अतीतानि । अत्रान्तरे सोमदत्तस्य पितुः कश्चन वृषभः दिवं गतः । यः बहूनि वर्षाणि कृषिकार्ये साहाय्यं कृतवान् सः एव वृषभः दिवं गतः इत्यतः सोमदत्तस्य पिता हस्तभङ्गं प्राप्तवान् इव । कृषिं विना तु जीवनम् असाध्यम् आसीत् ।

'मम पुत्रः राजास्थाने उद्योगी अस्ति ।

अतः सः राजानम् उक्त्वा मह्यम् एकं वृषभं दापयेत् अपि' इति विचिन्त्य सोमदत्तस्य पिता काशीं गतवान् ।

पितुः मुखात् सर्वं श्रुत्वा सोमदत्तः अवदत् - ''तात ! भवान् माता च वृद्धौ जातौ । इतःपरम् अपि अल्पायां भूमौ कृष्या किम् ? भवन्तौ उभौ अपि अत्र आगत्य मया सह सुखेन निवसताम्'' इति ।

एतत् श्रुत्वा पिता अवदत् - ''ग्रामं त्यक्त्वा अत्र आगन्तुम् अहं न इच्छामि । भवान् एकं वृषभं दापयतु । तेन अहम् आनन्देन ग्रामे कृषिं कुर्वन् दिनानि यापयिष्यामि । ग्रामे मया या शान्तिः तृप्तिः च प्राप्यते सा अन्यत्र न प्राप्येत'' इति ।

सोमदत्तः तु सद्यः एव राजास्थाने उद्योगं प्राप्तवान् आसीत् । सः उद्योगः अपि सामान्यः एव । अतः वृषभक्रयणाय यावत् आवश्यकं तावत् धनं न आसीत् तस्मिन् । सः राजानं याचितुम् अपि न इच्छति स्म । 'उद्योग-प्राप्तिसमनन्तरम् एव धनस्य याचनम् उचितं न' इति चिन्तयन् सः पितरम् अवदत् - ''अहं यदि राजानं वृषभं याचेयं तर्हि सः मां पृच्छेत् यत् राजोद्योगिने भवते इदानीं वृषभस्य का आवश्यकता इति । अन्यच्च सद्यः एव उद्योगं प्राप्तवान् अहं याचनां करोमि चेत् तत् उचितं न भवेत् अपि । अतः मम तु भाति यत् भवान् एव राजानं याचति चेत् वरम् इति । भवान् राजानं दृष्ट्वा वस्तुस्थितिं निवेद्य वृषभं याचतु । सः भवते अवश्यं वृषभं दद्यात् एव'' इति ।

किन्तु सोमदत्तस्य पित्रे एषः प्रस्तावः न



अरोचत । सः पुत्रम् अवदत् - ''वत्स ! अहं तु कश्चन अशिक्षितः ग्रामीणः । हलचालनात् ऋते अहं किमपि न जानामि । क्व राजा, क्व राजास्थानं, क्व च अहम् ! कथञ्चित् राजास्थानं प्रविशेयं चेदपि मम मुखात् तत्र किमपि न निर्गच्छेत् । राज्ञः पुरतः कथं व्यवहरणीयम् इत्यपि अहं सर्वथा न जानामि । अतः भवान् एव एतत् कार्यं करोतु'' इति ।

''तात ! अलं चिन्तया । अहम् एकं श्लोकं लिखित्वा ददामि भवते । द्वित्राणि दिनानि तं भवान् कण्ठस्थं करोतु । ततः राजास्थानं गत्वा तमेव श्रावयतु । ततः इष्टं सिद्धं भविष्यति'' इति वदन् सोमदत्तः पितरि धैर्यं पूरितवान् ।

एतदनन्तरं सः कञ्चित् श्लोकं रचयित्वा

पित्रे दत्तवान् । पिता तं कण्ठस्थं कृतवान् । स च एवम् -

द्वे मे गावौ महाराज
करोमि स्म कृषिं ततः ।
तयोरेको मृतो देव
द्वितीयं देहि मे नृप ।।

वृद्धः महता श्रमेण एतं श्लोकं कण्ठस्थीकृतवान् । ततः सोमदत्तः तं राजास्थानं नीतवान् ।

वृद्धः पुत्रस्य सूचनानुगुणं राजानं मन्त्रिणः च नमस्कृत्य तूष्णीं स्थितवान् ।

"कः भवान् ? किम् इष्यते भवता ?" इति अपृच्छत् राजा ।

वृद्धः आत्मना कण्ठस्थीकृतं श्लोकं तत्र श्रावितवान् । किन्तु महत्याः भीतेः कारणतः श्लोकोच्चारणसमये अल्पः प्रमादः जातः । सः श्लोकम् उच्चारितवान् इत्थम् -

द्वे मे गावौ महाराज
करोमि स्म कृषिं ततः ।
तयोरेको मृतो देव
द्वितीयं विन्द मे नृप ।। इति ।

एतं श्लोकं श्रुत्वा आस्थानिकाः सर्वे हसितवन्तः । सोमदत्तः लज्जया शिरः अवनमय्य स्थितवान् । यतः तदीयेन पित्रा 'मह्यम् एकः वृषभः दीयताम्' इति प्रार्थनीयम् आसीत् । किन्तु सः उक्तवान् आसीत् यत् द्वितीयं स्वीकुरु इति ।

एतत् श्रुत्वा राजा हसन् पृष्टवान् - "किं तं द्वितीयं वृषभं दातुम् एव भवान् स्वगृहात् एतावद्दूरम् आगतवान् ?" इति ।

"महाराज ! वस्तुतः मम आगमनं तेन उद्देशेन न आसीत्, तथापि इदानीं तु भाति यत् तं वृषभं भवान् स्वीकरोति चेदेव वरम् इति । तस्य कारणतः एव एतत्सर्वं जायमानम् अस्ति" इति वदन् वृद्धः प्रवृत्तं सर्वं श्रावितवान् ।

सोमदत्तस्य नीतिपूर्णं व्यवहारं दृष्ट्वा राजा नितरां सन्तुष्टः । अन्ये आस्थानिकाः कथमपि अवसरं प्राप्य राजानं किमपि किमपि याचन्तः भवन्ति स्म । किन्तु सोमदत्तेन एवं न कृतम् आसीत् ।

अतः सन्तुष्टः राजा अष्टौ वृषभयुगलानि अलङ्कृत्य सोमदत्तस्य पित्रे दत्त्वा तं तृप्तं कृत्वा प्रेषितवान् ।





# रामायणम्

वसिष्ठमुनेः वचनं श्रुत्वा सन्तृप्तः राजा दशरथः सन्तोषेण एव रामलक्ष्मणौ प्रेषितवान् विश्वामित्रेण सह । विश्वामित्रम् अनुसरन्तौ प्रस्थितवन्तौ रामलक्ष्मणौ । क्रोशं यावत् गमनानन्तरं तैः सरयूनद्याः दक्षिणतीरं प्राप्तम् ।

''राम ! भवान् नदीं गत्वा आचमनं कृत्वा आगच्छतु । अहं भवते बलम् अतिबलम् इत्येते विद्ये दास्यामि । एते विद्ये श्रमं, सर्वविधं रोगम्, आपदं च निवारयतः । यावत् भवान् एतान् मन्त्रान् जपति तावत् भवत्तुल्यः सुन्दरः, बुद्धिमान्, कुशलः, वाक्पटुः अन्यः न भवति । एतयोः प्रभावतः भवता बुभुक्षा अपि न प्राप्यते । भवतः कीर्तिः सर्वासु दिक्षु अचिरात् एव प्रसरिष्यति'' इति रामम् अवदत् विश्वामित्रः ।

एतदनुगुणं रामः नदीं गत्वा स्नात्वा परिशुद्धः भूत्वा आचमनं कृत्वा प्रत्यागतवान् । ततः विश्वामित्रः बलम् अतिबलम् इत्येते विद्ये तं बोधितवान् । ततः ते सर्वे सरयूतीरे विश्रान्तिं प्राप्तवन्तः ।

प्रातःकाले विश्वामित्रः तौ उत्थापितवान् । सर्वे सरयूनद्यां स्नानं कृतवन्तः । अनुष्ठानादिकं समाप्य रामलक्ष्मणौ विश्वामित्रम् अनुसृतवन्तौ । ततः ते गङ्गासरयूसङ्गमस्थलं प्राप्तवन्तः ।

तत्र कश्चन आश्रमः आसीत् । पूर्वं शिवः यत्र तपः आचरति स्म तत्र आगत्य कामदेवः तस्य तपसः भङ्गाय प्रयासं कृतवान् । तस्मात् क्रुद्धः शिवः तृतीयं नेत्रम् उद्घाटितवान् ।



ततः कामदेवः भस्मतां गतः । ततः आरभ्य तस्मिन् आश्रमे शिवभक्ताः मुनयः वसन्ति । तस्मिन् देशे कामदेवस्य अङ्गं (शरीरम्) विनष्टम् इत्यतः स च देशः अङ्गदेशत्वेन ख्यातः जातः ।

रामलक्ष्मणौ विश्वामित्रमुखात् एतां कथां ज्ञातवन्तौ । अनन्तरदिने नौकया ते गङ्गानदीं तीर्णवन्तः । ततः ते घोरं किञ्चन अरण्यं प्राप्तवन्तः । तत्र मानवमात्रस्यापि सञ्चारः न दृश्यते स्म । सिंहव्याघ्रादीनां गर्जनं, गजानां बृंहणम् इत्यादयः निरन्तरं श्रूयन्ते स्म । हरिणाः शशाः इत्यादयः निर्बाधं सर्वत्र सञ्चरन्ति स्म । वन्याः महिषाः, कृष्णमुखाः वानराः, महासूकराः इत्यादयः अपि दृश्यन्ते स्म । सर्वत्र महावृक्षाः गुल्मलतादयः च दृष्टिगोचराः भवन्ति स्म । अतः तत्र सञ्चारः नितरां क्लेशकरः आसीत् ।

एतत् घोरम् अरण्यं दृष्ट्वा रामः विश्वामित्रम् अपृच्छत् – ''मुनिवर्य ! एतस्य अरण्यस्य किं नाम ?'' इति ।

तदा विश्वामित्रः अवदत् – ''पूर्वम् अत्र मलद-करूषदेशौ आस्ताम् । ताटका नाम यक्षी तस्याः पुत्रः मारीचः च तौ देशौ पूर्णतः नाशितवन्तौ । तस्मात् भीताः जनाः एतौ देशौ परित्यज्य अन्यत्र गताः । ताटका न सामान्या यक्षी, अपि तु सहस्रगजबलोपेता सा । सस्यश्यामलं देशं सा महारण्यं कृतवती'' इति ।

तदा रामः अपृच्छत् – ''यक्षाः अल्पशक्तिमन्तः इति श्रूयते । यक्षकुले एव जाता एषा ताटका कथम् एतावतीं शक्तिं प्राप्तवती ?'' इति ।

''वत्स ! राम ! सा च काचित् महती कथा । पूर्वं सुकेतः नाम कश्चन यक्षः आसीत् । सन्तानप्राप्त्यर्थं तेन घोरं तपः आचरितम् । ततः सन्तुष्टः ब्रह्मा वरं दत्तवान् यत् सहस्रगजबलयुक्ता पुत्री जायताम् इति । वस्तुतः सुकेतेन सहस्रगजबलयुक्तः पुत्रः प्रार्थितः आसीत् । किन्तु प्राप्ता आसीत् सहस्रगजबलयुक्ता पुत्री । एवं ब्रह्मणः वरस्य परिणामतः ताटकायाः जन्म जातम् । तारुण्ये सा महारूपवती एव आसीत् । सुकेतः सुन्दनामकाय यक्षाय तां दत्त्वा विवाहं निर्वर्तितवान् । किञ्चित्कालानन्तरं ताभ्यां दम्पतीभ्यां मारीचः नाम पुत्रः प्राप्तः । सः पराक्रमेण इन्द्रतुल्यः आसीत् । अतः एव महान् अहङ्कारः आसीत् तस्य ।

कदाचित् तपस्यन् अगस्त्यः ताटकायाः पतिं सुन्दं मारितवान् । अतः ताटका मारीचः च प्रतीकारे मतिं कृतवन्तौ । तौ गर्जन्तौ अगस्त्यस्य संहाराय निर्गतौ । तदा अगस्त्यः शापं दत्तवान् यत् भवन्तौ राक्षसौ भवताम् इति । तस्मात् ताटका सौन्दर्यहीना घोराकारा च जाता । नरभक्षणप्रवृत्तिम् आरब्धवती सा । सा अगस्त्यं पीडयितुं समर्था न जाता । अतः इदानीं सा पुण्यभूमीः सर्वाः नाशयन्ती अस्ति । राम ! सा ताटका भवता संहरणीया । सा स्त्री इति तस्यां दया सर्वथा मास्तु । तस्याः दौष्ट्यं नितरां हानिकारकम् । अतः तस्याः मारणात् न किमपि पापम्'' इति अवदत् विश्वामित्रः ।



रामः करौ योजयित्वा अवदत् - ''मुनिवर्य ! पित्रा निर्दिष्टम् अस्ति यत् भवतः आदेशः शिरसा वोढव्यः इति । अतः भवतः आज्ञायाः अनुसारं ताटकायाः वधं करिष्यामि'' इति ।

एतदनन्तरं रामः धनुषि ज्यां योजयित्वा सकृत् टङ्कारं कृतवान् । तं ध्वनिं श्रुत्वा ताटका अन्ये अरण्यवासिनः च नितराम् आश्चर्यचकिताः ।

तं ध्वनिम् अनुसरन्ती ताटका धावन्ती आगतवती । तां दूरात् दृष्ट्वा रामः लक्ष्मणम् अवदत् - ''लक्ष्मण ! अहो, विकृतः आकारः एतस्याः ! एतस्याः दर्शनात् पराक्रमिणः अपि भीताः भवेयुः । एषा स्त्री इत्यतः एतस्याः मारणे न उत्सहते मम मनः । एषा समीपम् आगच्छतु नाम । एतस्याः नासिकां कर्णौ च कर्तयाव, येन तस्याः गर्वः चूर्णीकृतः स्यात्'' इति ।

एतत् वचनं श्रुतवती ताटका नितरां कुपिता । सा उग्रतां प्राप्य धूलिं किरन्ती पाषाणखण्डैः रामलक्ष्मणौ ताडितवती । तदा रामलक्ष्मणौ बाणप्रयोगेण तस्याः हस्तौ कर्तितवन्तौ । लक्ष्मणः अग्रे गत्वा तस्याः नासिकां कर्णौ च कर्तितवान् । तथापि ताटकायाः अटाटोपः न स्थगितः ।

तदा विश्वामित्रः अवदत् - ''राम ! एषा पापिनी दयार्हा न सर्वथा । सजीवं स्थिता एषा यत्किमपि कर्तुम् अर्हेत् । सन्ध्याकालात् पूर्वम् एव एषा मारणीया भवता । प्रातः सायं च राक्षसानां बलम् अधिकं भवति । अतः तस्मिन् समये तेषां वधः सर्वथा दुष्करः'' इति ।

रामः झटिति बाणप्रयोगं कृतवान् । स च



बाणः ताटकायाः उरोभागे लग्नः । तस्मात् सा अधः अपतत्, प्राणैः वियुक्ता अभवत् च ।

एतस्मात् महर्षि विश्वामित्रः नितरां प्रसन्नः जातः । सः रामम् आलिङ्ग्य अवदत् – ''वत्स ! एतां मारयता भवता महत् एव कार्यं कृतम् । एतां रात्रिं वयम् अत्रैव यापयाम । श्वः प्रातः इतः निर्गच्छाम'' इति ।

प्रातः विश्वामित्रः स्नात्वा पूर्वाभिमुखम् उपविश्य रामं च पुरतः उपवेश्य विविधास्त्र-सम्बद्धान् मन्त्रान् बोधितवान् । रामः तेषां जपं यदा कृतवान् तदा सर्वाणि अस्त्राणि स्वीयेन रूपेण प्रत्यक्षीभूय रामं नमस्कृत्य अवदन् – ''वयं भवतः भृत्याः स्मः । यथादेशं व्यवहरिष्यामः च'' इति ।

रामः तानि अस्त्राणि सकृत् स्पृष्ट्वा अवदत् – ''इदानीं भवन्तः मम मनसि वासं कुर्वन्तु'' इति ।

एतदनन्तरं सः तेषाम् अस्त्राणाम् उपसंहार-मन्त्रम् अपि विश्वमित्रमुखात् यथाविधि ज्ञातवान् । ततः ते त्रयः अपि अग्रे प्रस्थित-वन्तः ।

अचिरात् एव तैः पर्वतपार्श्वे स्थितम् एकं सुन्दरं वनं दृष्टम् । तत् पश्यन् रामः अपृच्छत् – ''श्रीमन् ! एतस्य वनस्य दर्शनात् महान् आनन्दः अनुभूयते मया । आश्रमः इव भासते एतत् वनम् । एतत्सम्बन्धिनी काचित् कथा किम् अस्ति ?'' इति ।

तदा विश्वामित्रः तद्वनसम्बन्धिनीं कथाम् अश्रावयत् – ''वत्स ! प्राचीनकालीना कथा

एषा । पूर्वं विरोचनो नाम राजा आसीत् । तस्य पुत्रः बलिः महापराक्रमी । त्रीन् अपि लोकान् विजित्य स्वर्गस्य आधिपत्याय सः प्रयत्नम् आरब्धवान् । स्वर्गवासिनः देवाः एतस्मात् नितरां भीताः सन्तः विष्णुं शरणं गतवन्तः । विष्णुः तेभ्यः अभयं दत्त्वा अवदत् - 'अहं नूतनम् अवतारं प्राप्य तस्य संहारं करिष्यामि' इति । ततः सः कश्यपपुत्ररूपेण वामनः सन् जन्म प्राप्तवान् । बलेः याग-स्थले सः स्वयम् उपस्थितः अभवत् याचकः सन् । बलिः तं सादरं स्वागतीकृतवान् । अर्घ्यपाद्यादिभिः तं सत्कृत्य आगमनकारणं पृष्टवान् । वामनस्य आगमनस्य उद्देशं ज्ञातवान् गुरुः शुक्राचार्यः बलिम् अवदत् - 'याचक-रूपेण वामनः सन् स्वयं विष्णुः एव उपस्थितः अस्ति । एषः भवतः विनाशं करिष्यति निश्चयेन । अतः भवान् एतस्य याचनां न पुरस्करोतु' इति । किन्तु बलिः अत्र उपेक्षां दर्शितवान् । वामनः पदत्रयमितां भूमिम् अयाचत । बलिः तावत्याः भूमेः दानं सहर्षम् अङ्गीकृतवान् । शुक्राचार्येण निषिध्यमानः अपि बलिः तावत्याः भूमेः दानाय सङ्कल्पं कृतवान् । यतः सः विष्णोः परमभक्तः आसीत् । विष्णुः त्रिभिः पदैः त्रीन् अपि लोकान् अभिव्याप्य बलिम् अधोलोकं प्रति प्रेषितवान् । एवं बलेः निग्रहः कृतः विष्णुना । वामनः तस्य पिता च एतस्मिन् एव आश्रमे वसन्तौ दीर्घकालं तपः कृतवन्तौ । तयोः तपसा पूतम् अस्ति एषः प्रदेशः । अतः मया अपि अत्रैव आश्रमः निर्मितः । पूर्वं तु एषः प्रदेशः तपसे नितराम् अनुकूलः आसीत् । किन्तु एषु दिनेषु तादृशी स्थितिः नास्ति । अत्र दुष्टाः



राक्षसाः पुनः पुनः आगच्छन्तः सन्ति । अस्मान् बहुधा पीडयन्तः सन्ति ते । तेषां पीडाः सोढुम् अशक्याः जाताः सन्ति । वयम् अत्र इदानीं शान्त्या स्थातुं कष्टम् अनुभवामः । यज्ञ-यागादयः इदानीं निर्बाधं न प्रचलन्ति । अतः ते दुष्टाः राक्षसाः भवता संहरणीयाः । अस्मिन् प्रदेशे शान्तिः पुनः प्रतिष्ठापनीया च'' इति ।

विश्वामित्रस्य आश्रमस्य नाम सिद्धाश्रमः इति । रामलक्ष्मणाभ्यां सह आश्रमं प्रविशन्तं विश्वामित्रं दृष्ट्वा सर्वे मुनयः आगत्य नमस्कारं कृतवन्तः, रामलक्ष्मणौ च प्रीत्या स्वागती-कृतवन्तः च । कुशलवार्तालापस्य अनन्तरं विश्वामित्रेण किञ्चित्कालं विश्रामः कृतः । ततः रामलक्ष्मणौ तत्समीपम् आगत्य तं प्रणम्य अवदताम् - ''मुनिवर्य ! इतःपरं यज्ञस्य सन्नाहस्य आरम्भः भवतु । आवां यज्ञस्य रक्षणं करिष्यावः'' इति ।

रात्रिः अतीता । अनुष्ठानं समाप्य राम-लक्ष्मणौ विश्वामित्रसमीपम् आगतौ । विश्वा-मित्रं प्रणम्य तौ पृष्टवन्तौ - ''महात्मन् ! राक्षसाः कदा आगच्छेयुः ? कदा आवाभ्यां विशेषजागरूकता वोढव्या ?'' इति ।

विश्वामित्रः उत्तरं किमपि न अवदत् । किन्तु यज्ञवेदिकायां स्थिताः अन्ये मुनयः अवदन् - ''विश्वामित्रः यागदीक्षादीक्षितः अस्ति । दीक्षाकाले मौनाचरणं तस्य व्रतम् । अग्रिमेषु षट्सु दिनेषु अहोरात्रं रक्षणं करणीयं भवद्भ्याम्'' इति ।

यज्ञस्य अग्निः प्रज्वलति स्म । निरन्तरं मन्त्रोच्चारणं प्रचलति स्म । तदवसरे आकाशे घोरः ध्वनिः उत्पन्नः । सुबाहुः मारीचः च अन्यैः राक्षसैः सह आगत्य यज्ञवेदिकायां रक्तमांसवर्षणं कृतवन्तः ।

रामः शिरः उन्नीय अपश्यत् । राक्षसाः अट्टहासं कुर्वन्तः तेन दृष्टाः । क्रुद्धः सः मानवास्त्रं धनुषि संयोज्य प्रयुक्तवान् । तस्मात् मारीचः समुद्रे अपतत् । ततः रामः आग्नेयास्त्रं प्रयुज्य सुबाहुं मारितवान् । वाय्वस्त्रेण अन्ये राक्षसाः तेन मारिताः । एतस्मात् स च प्रदेशः राक्षसपीडाविनिर्मुक्तः जातः । ततः विश्वा-मित्रस्य यागः निर्विघ्नं परिसमाप्तः ।

यागसमाप्तेः अनन्तरं विश्वामित्रः रामस्य पराक्रमं प्रशंसन् उक्तवान् - ''वत्स ! महान् उपकारः कृतः भवता'' इति ।





# बुद्धिमत्ता

रत्नाकरः नन्दनपुरे कश्चन महावणिक् आसीत् । तस्य अद्वितीयः पुत्रः अजितसेनः । चित्रावतीनगरस्य धनाढ्यस्य पुत्री शीलवती गुणवती सुन्दरी बुद्धिमती च । एतां वार्तां ज्ञातवान् रत्नाकरः तां स्नुषात्वेन गृहम् आनीतवान् । अजितसेनः पत्न्याः बुद्धिमत्तायाः सौन्दर्यस्य च विषये गर्वं वहति स्म । किन्तु रत्नाकरः चिन्तयति स्म यत् स्नुषायाः बुद्धिमत्ता परीक्षणीया इति ।

कदाचित् मध्यरात्रे शीलवती रिक्तं घटं स्वीकृत्य गृहात् निर्गता, दीर्घकालानन्तरं रिक्तहस्ता प्रत्यागता च । एतत् दृष्ट्वा रत्नकारः अचिन्तयत् यत् एषा साहसिनी अस्ति, स्वीयैः साहसकृत्यैः उभयोः अपि कुलयोः कीर्तिं नाशयितुम् अर्हति इति ।

अतः सः अनन्तरदिने पुत्रम् असूचयत् - ''वत्स ! कानिचन दिनानि पत्नीं भवान् मातृगृहं प्रति प्रेषयतु'' इति ।

अजितसेनः पत्न्याः प्रेषणे सहमतः न आसीत् । अतः सः एतद्विषये आसक्तिं न प्रदर्शितवान् । किन्तु पितुः विरोधम् अपि न कृतवान् ।

अतः मया एव एतत्कार्यं करणीयम् इति सङ्कल्प्य रत्नाकरः स्नुषया सह तस्याः मातृगृहं प्रति प्रस्थितवान् एव । मध्येमार्गं काचित् नदी प्राप्ता । रत्नाकरः स्नुषाम् असूचयत् यत् पादरक्षां हस्तेन गृहीत्वा नदीं क्रामतु इति । किन्तु शीलवती तु पादरक्षां धृत्वा एव नदीं क्रान्तवती । एतस्मात् रत्नाकरः यद्यपि असन्तुष्टः जातः, तथापि मौनेन स्थितवान् ।

किञ्चिद्दूरं गमनानन्तरं फलसमृद्धं किञ्चन क्षेत्रं दृष्टम् । तत् दृष्ट्वा रत्नाकरः अवदत् - ''अत्र फलसमृद्धिः उत्तमा अस्ति । अतः एतस्य क्षेत्रस्य स्वामी एतस्मिन् वर्षे महान्तं लाभं प्राप्स्यति'' इति ।

''उपभोगानन्तरम् अवशिष्यते चेदेव खलु



लाभस्य प्रसक्तिः'' इति अवदत् शीलवती ।

एतत् श्रुत्वा रत्नाकरः अचिन्तयत् - 'एषा विना चिन्तनम् उत्तरं ददाति । एषा कथं वा बुद्धिमतीत्वेन निर्देशम् अर्हेत् ?' इति ।

किञ्चित् अग्रे यदा गतं तदा किञ्चन नगरं प्राप्तम् । तस्य नगरस्य सौन्दर्यं दृष्ट्वा रत्नाकरः साश्चर्यम् अवदत् - ''अहो ! एतस्य नगरस्य सौन्दर्यम् !'' इति ।

''शत्रवः यावत् आक्रमणं न कुर्युः तावत्'' इति अवदत् शीलवती ।

किञ्चिद्दूरं यदा गतं तदा श्रान्तेः निवारणाय रत्नकारः कस्यचित् वटवृक्षस्य अधः उपाविशत् । शीलवती तु ततः दूरे उपविष्टवती ।

'एषा स्वभावेन दुष्टा एव । महान् अहङ्कारः एतस्याः । ज्येष्ठानां व्यवहारे अनादरः अपि एतस्याः । मातृगृहे एतस्याः त्यागः एव श्रेयसे' इति अचिन्तयत् रत्नाकरः ।

एतदनन्तरं तौ कञ्चित् वृषभशकटम् आरुह्य कञ्चित् ग्रामं प्राप्तवन्तौ । कस्यचित् दयालोः गृहे ताभ्यां भोजनं कृतम् । भोजनानन्तरं रत्नाकरः शकटे शयितवान् । शीलवती शकटस्य छायायाम् उपविष्टवती ।

तदवसरे वृक्षस्थः कश्चन काकः काकारवम् अकरोत् । तं श्रुत्वा शीलवती अवदत् - ''अये काक ! किमर्थम् एवं रट्यते ? मया कृतस्य एकस्य कार्यस्य कारणतः एव गृहं त्यक्तव्यम् अभवत् । अपरः दोषः यदि क्रियेत तर्हि पतिमुखदर्शनभाग्यम् अपि विलुप्येत'' इति ।

एतत् श्रुत्वा रत्नाकरः आश्चर्यान्वितः जातः । सः स्नुषायाः समीपं गत्वा अपृच्छत् - ''इदानीं भवती यत् उक्तवती तस्य किं तात्पर्यम् ?'' इति ।

''आर्य ! किम् अहं वदानि ? मधुराणि वचनानि उच्यन्ते इत्यतः एव शुकः पञ्जरबन्धं प्राप्नोति । तथा अस्ति ममापि दशा । विशेषगुणः एव मम हानये जातः । अहं पशुपक्षिणां कथनम् अवगन्तुं शक्नोमि'' इति अवदत् शीलवती ।

'मम स्नुषा एषा विकलमतिः इति भाति' इति अचिन्तयत् रत्नाकरः ।

तावता शीलवती एव पुनः अवदत् - ''केभ्यश्चित् दिनेभ्यः पूर्वं रात्रिकाले कश्चन शृगालः उच्चैः अवदत् यत् नद्याम् आभरणसहितः शवः प्लवते इति । एतत् श्रुत्वा अहं रिक्तं घटं गृहीत्वा नदीतीरं गता । शवं नदीतः बहिः आनीय आभरणानि घटे पूरयित्वा शवः

शृगालाय अर्पितः, घटः भूमौ निखातः च । एतत् कार्यं भवति सन्देहम् अजनयत् । तस्य फलम् इदानीम् अनुभवामि'' इति ।

एतत् श्रुतवतः रत्नाकरस्य मनः खिन्नं जातम् । स्नुषायाः विषये दया उत्पन्ना । तावता शीलवती पुनरपि कथनम् अनुवर्तितवती - ''पशुपक्षिषु मद्विषये महती प्रीतिः । एषः काकः पुनः पुनः वदति यत् एतस्य वृक्षस्य अधः निधिः अस्ति इति'' इति ।

रत्नाकरः झटिति एव वृक्षस्य अधः अखनत् । तस्मात् तेन निधिः प्राप्तः । एतस्मात् स्नुषाविषये रत्नाकरस्य आदरः समुत्पन्नः । सः शीलवतीम् अवदत् - ''वत्से ! मया भवत्याः विषये अन्यथाभावः प्राप्तः आसीत् । एतदर्थम् अहं खिन्नः अस्मि । इतः परं गृहम् एव गच्छाव'' इति ।

प्रतिप्रयाणम् आरब्धम् । मार्गे पुनरपि सः एव वटवृक्षः प्राप्तः, यश्च गमनसमये दृष्टः आसीत् । रत्नाकरः स्नुषाम् अपृच्छत् - ''भवती गमनसमये किमर्थं वटवृक्षस्य अधः न उपविष्टवती ?'' इति ।

शीलवती अवदत् - ''वटवृक्षस्य कोटरे सर्पाः भवन्ति । वृक्षस्य उपरि उपविष्टाः पक्षिणः विष्ठां पातयन्ति अपि । अतः मया तत्र न उपविष्टम्'' इति ।

''युक्तम् उच्यते भवत्या'' इति अवदत् रत्नाकरः । एतदनन्तरं नगरं प्राप्तम् । तदा शीलवती अवदत् - ''एतस्मिन् नगरे यात्रिणां वासाय एका अपि धर्मशाला नास्ति । अतः विशेषप्रयत्नं विनैव शत्रवः एतत् नगरं वशीकर्तुम् अर्हन्ति'' इति ।

एतदनन्तरं फलसमृद्धं क्षेत्रं प्राप्तम् । तत् दृष्ट्वा शीलवती अवदत् - ''एतस्य क्षेत्रस्य स्वामी धान्यं विक्रीय धनस्य सदुपयोगं चिन्त-



यिष्यति चेदेव लाभं प्राप्तुम् अर्हति'' इति ।

पुनरपि किञ्चिद्दूरं यदा गतं तदा लघुनदी प्राप्ता । तां दृष्ट्वा शीलवती अवदत् – '' नद्यां शिलाः भवन्ति, जन्तवः चापि । अतः नदी-तरणसमये पादरक्षाधरणं वरम्'' इति ।

स्नुषायाः बुद्धिमत्तां प्रशंसन् गृहम् आगतः रत्नाकरः गृहस्य उत्तरदायित्वं स्नुषायै अर्पित-वान् । एतस्मात् अजितसेनः अवगतवान् यत् मम पत्नी पितुः विश्वासं सम्पादितवती अस्ति इति ।

तस्मिन् काले तस्य देशस्य राजा नूतनस्य मन्त्रिणः नियुक्तिं कर्तुम् इच्छति स्म । अतः सः देशस्य बहून् मेधाविनः मेलयित्वा समालोचनम् अकरोत् ।

मन्त्रिनियुक्तिविषये गोष्ठी आयोजिता । आसक्तानां परीक्षा अपि आरब्धा । तदवसरे अजितसेनः पत्न्या सह राजधानीं गतवान् । धर्मशालायां वासव्यवस्थां कृत्वा राजास्थानं गतवान् च ।

तत्र राजा सर्वान् मन्त्रिस्थानापेक्षिणः अपृच्छत् – ''यः राजानं ताडयति तस्य कीदृशः दण्डः ?'' इति ।

सर्वे मेधाविनः राज्ञः प्रशंसां प्राप्तुम् इच्छन्तः अवदन् यत् सः कठोरतया दण्डनीयः इति । कश्चित् अवदत् – 'तस्य शिरश्छेदः एव करणीयः' इति ।

अजितसेनः क्षणकालम् एतत्सर्वं लक्षित-वान् । ततः विना शब्दम् उत्थाय धर्मशालां गत्वा शीलवतीं राज्ञः प्रश्नम् अश्रावयत् ।

शीलवती अजितसेनम् अवदत् – ''राजानं प्रहर्तुं कः समर्थः ? शृङ्गारचेष्टासमये राज्ञी प्रहरेत्, लालनसमये पुत्रो वा प्रहरेत् । एतस्य प्रतिस्पन्दरूपेण अधिकप्रीतिप्रदर्शनम् एव युक्तम्'' इति ।

अजितसेनः झटिति राजास्थानम् आगत-वान् । तावता अपि जनाः विविधानाम् उत्तराणां दाने एव मग्नाः । सर्वे यदा मौनम् आश्रितवन्तः तदा अजितसेनः उत्थाय अवदत् – ''महा-राज ! राजानं यः प्रहरति तस्मिन् अधिका प्रीतिः प्रदर्शनीया'' इति ।

सन्तुष्टः राजा अजितसेनम् एव मन्त्रिपदे नियुक्तवान् । एतदनन्तरम् अजितसेनः पत्न्याः शीलवत्याः साहाय्येन योग्याः सूचनाः यच्छन् मेधाविमन्त्रिरूपेण ख्यातः जातः ।



वीरसिंहस्य मरणात् शान्ति-पुरीयस्य सिंहासनस्य प्राप्तिमार्गः निष्कण्टकः भवति आर्यस्य । जयानन्दस्य मार्गदर्शनस्य अनुगुणं दलपतिः सुखदेवः राजभवनं गत्वा स्थितेः नियन्त्रणं करोति । कश्चन अङ्गरक्षकः आगत्य तम् एकान्तस्थलं प्रति नयति ।

# आर्यः

## अज्ञातराजकुमारस्य रहस्यम्

30

चित्रम् - गान्धि-अय्यः

वीरसिंहस्य सैनिकाः विद्रोहचिन्तनं कुर्वतः सन्ति महोदय ।

कृतघ्नाः ते ।

सुखदेवः वेगेन राजभवनात् बहिः आगच्छति

मया स्पष्टतया उक्तम् अस्ति यत् वीरसिंहः दिवं गतः इति । राजकुमारस्य आर्यस्य स्वागतार्थं सज्जाः भवन्तु भवन्तः । सः एव सिंहासनस्य उत्तराधिकारी ।

मया स्मारयितुम् इष्यते यत् यदि भवत्सु कोऽपि विरोधकार्यं कुर्यात् तर्हि तेन महत् एव मूल्यं दातव्यं भवेत् । मम सैनिकाः सर्वविधाम् अपि स्थितिं सम्मुखीकर्तुं सज्जाः एव ।

यदि मम वचने न विश्वासः तर्हि पृष्ठतः दृश्यताम् ।

एतावन्तः !

आश्चर्यकरम् !

वीरसिंहसैनिकाः जब्बरसेनः च अवगच्छन्ति यत् अस्माकं सङ्ख्या नितरां न्यूना इति ।

दलपतेः आज्ञायाः पालनम् एव वरम् इति भाति ।

सर्वे स्वीयं स्थानं प्रति गच्छन्तु ।

वयम् आर्यस्य सेवां करवाम । सः यः कोऽपि स्यात्राम ।

अनन्तरदिने प्रातः आश्रमे ....

गुरुदेव ! आशीर्वादेन अनुगृह्यताम् ।

आर्य ! मम पुत्र !

भवतः जीवनस्य महत्त्वपूर्णं दिनम् एतत् । भवान् अज्ञातवंशः सन् वृद्धिं गतः ।

भवता या कृपा दर्शिता तदर्थं कृतज्ञः अस्मि ।

आर्य ! भवान् प्रकृतिमातुः अङ्के प्रवृद्धः । इदानीं भवता विशाले प्रपञ्चे पदं स्थाप्यमानम् अस्ति । प्रजानां सम्मुखे भवता स्वस्य स्थानस्य ग्रहणाय गन्तव्यम् ।

गुरुवर्य ! भवद्विरहितं जीवनम् ऊहितुम् अपि नार्हामि अहम् ।

आर्य ! यदा मम आवश्यकता भविष्यति तदा अहम् उपस्थितः भविष्यामि । इदानीं भवान् मातापितरौ नमस्करोतु ।

अहं पुनरपि भवत्सकाशाम् आगमिष्यामि ।

आर्यः स्वस्य मातापित्रोः स्मारकस्य समीपं गच्छति ।



मातुः स्मारकस्य पार्श्वे उपविष्टः आर्यः भावोद्वेगं निरोद्धुं कष्टम् अनुभवति ।







सुकन्यायाः तत्र उपस्थितिम् अभिवादनं च दृष्ट्वा आर्यः आश्चर्यं प्राप्नोति ।

सुकन्ये ! अहं सज्जः अस्मि ! शान्तिपुरं प्रति प्रस्थानं करवाव आवाम् ।

राजकुमार ! मया मन्दिरतः प्रसादः आनीतः ।


सुकन्या आर्यस्य ललाटे तिलकं धारयति ।
अचिरात् एव प्रस्थानं भवतु ।


कृपया एषा माला अपि ध्रियताम् । देव्याः आशीर्वादेन युक्ता अस्ति एषा ।
अनुगृहीतः अस्मि सुकन्ये !


सुकन्या स्वस्य शिबिकायाम् उपविशति । आर्यः अन्यस्यां शिबिकायाम् उपविशति ।


आर्यस्य शिबिका अन्यां शिबिकाम् अतिक्रम्य गच्छति ।


यात्रा राजभवनसमीपम् आगच्छति ।
अनुवर्तते

# सङ्गीतनृत्ययोः महोत्सवः



एकः दक्षिणे, अपरः उत्तरे चेति उभौ उत्सवौ फेब्रवरीमासे आरब्धौ सन्तौ मार्चमासे समाप्तिम् एष्यतः । तौ च स्तः - मध्यप्रदेशीयः खुजराहोत्सवः, आन्ध्रप्रदेशीयः दक्षिणोत्सवः चेति । पूर्वं बुन्देलखण्डसाम्राज्यस्य शासकानां चन्देलवंशीयानां धार्मिकराजधानी आसीत् खुजराहप्रदेशः । तत्रत्याः देवालयाः पश्चिमीयाः, पूर्वीयाः, दक्षिणीयाः चेति विभक्ताः आसन् । ते च देवालयाः सहस्राधिक-वर्षेभ्यः पूर्वं निर्मिताः । सङ्गीतनृत्यपोषकैः रजपूतराजैः ते देवालयाः निर्मापिताः । अतः मन्दिर-भित्तिषु चित्रितानि चित्राणि तेषां जीवनशैलीं, संस्कृतिं, धार्मिकविश्वासं च अभिव्यञ्जयन्ति । खुजराहनृत्योत्सवः सप्ताहं यावत् प्रचलिष्यति । एतस्य पृष्ठभूमिकायां कान्त्या प्रकाशमानाः देवालयाः भवन्ति । कथक्, मणिपुरी, ओडिस्सी, कूचिपुडि, भरतनाट्यं, कथक्कली इत्यादीनां विविधानां नृत्यप्रकाराणां वैभवं दर्शयिष्यति एषः नृत्योत्सवः । अनावृते अङ्गणे नृत्योत्सवः अयं प्रचलिष्यति । स्वीयस्य प्रदेशस्य करकौशलीयानां वस्तूनां प्रदर्शनाय कुशलकर्मणां कृते कश्चन उत्तमम् अवसरं कल्पयति अयम् उत्सवः । भाविनी जनता सांस्कृतिकपरम्परया वञ्चिता यथा न भवेत् तथा कर्तुं सांस्कृतिकसम्पत्तेः संरक्षणाय विशेषतः आयोज्यते एषः उत्सवः ।

हैदराबादनगरे प्रचलन् पञ्चदिनात्मकः दक्षिणोत्सवः दक्षिणभारतस्य कलावैभवं, कर-कौशल-सङ्गीत-नृत्यादीनां गरिमाणं च अभिव्यञ्जयति । मुस्लिम्शासनकाले जनप्रियतां गताः गझल्-कव्वाली-मुशायरीप्रभृतयः गान-प्रकाराः अत्र प्राधान्येन उपस्थाप्यन्ते । हैदराबाद-नगरे मणिमयानां काचकानां च वलयानां निर्माणम् आधिक्येन प्रचलति इत्यतः एतादृशानां, करकौशल-वस्तूनां च प्रदर्शनेन विरहितः कोऽपि उत्सवः अत्र न प्रचलति कदापि । हैदराबादीयाः नवाबीयाः च आहार-प्रकाराः अपि अत्र द्रष्टॄणां चित्तस्य आकर्षणे समर्थाः एव । एषः दक्षिणोत्सवः आन्ध्रप्रदेशीयया प्रवासोद्यमसंस्थया समायोजितः भविष्यति ।



# पुटोऽयं भवताम् पुटोऽयं भवताम्



भवदर्थकं विज्ञानम्

## अतिप्राचीनः जीवी

डैनोसार्नामकाः जीविनः न सन्ति अद्य लोके। किन्तु तस्मिन् एव कुले जाताः ट्युटारस्जीविनः तु सन्ति। ते न्यूझील्याण्ड्देशे दृश्यन्ते। ट्युटारस्जीविनः प्रायः २,२००,००,००० वर्षेभ्यः पूर्वम् आसन्। इदानीम् अपि तेषां जातिः अक्षुण्णतया अनुवर्तते।

ट्युटारस्जीविनः उरगकुलीयाः। किन्तु गृहगोधिकाजातौ मकरजातौ वा ते न अन्तर्भवन्ति। जीवसृष्टिकाले यादृशी शरीररचना आसीत् सा एव शरीररचना दृश्यते एतेषु अद्यापि। तेषां शरीरं विरलास्थियुक्तं सशल्कं च। अधिकशैत्यस्य सहने तेषां शक्तिः न्यूना। अतः एव सा सन्ततिः क्षीणा जाता।

ट्युटारस्जीविनः रात्रिञ्चराः। दिने बिले वसन्तः ते रात्रौ आहारं सम्पादयन्ति। ट्युटारस्जीविनी अण्डानि प्रसुते कुत्रचित् परित्यजति च। द्वादशानां मासानाम् अनन्तरम् अण्डेभ्यः शावकोत्पत्तिः। शावकाः अण्डानि विभिद्य बहिः आगत्य स्वयम् आत्मरक्षणोपायं चिन्तयन्ति। माता द्वित्रेषु पञ्चषेषु वा वर्षेषु एकवारम् अण्डानि प्रसुते।

### भवतां परिसरः

## शुष्काः मेघाः न हि लाभाय



आकाशे दृश्यमानाः मेघाः सर्वे उत्तमं वर्षणं कुर्वन्ति इति न। शुष्काः अपि मेघाः भवन्ति केचन। इस्रेलीयाः विज्ञानिनः ज्ञापितवन्तः सन्ति यत् परिसरमालिन्यं मेघैः क्रियमाणां वृष्टिं निवारयितुम् अर्हति इति। यानयन्त्रागारादयः यं धूमं निस्सारयन्ति तेन धूमेन निर्मिते गोले उष्णवायुकारणतः उत्पन्नाः जलकणाः निबद्धाः भवन्ति। तस्मात् अल्पसङ्ख्यया विद्यमानाः ते धूमावरणेन अवरुद्धाः भवन्ति। अतः वृष्टिपतनं निवारितं भवति सहजतया।

इस्रेलीयाः विज्ञानिनः शुष्कमेघाणां चित्रं प्राप्य अध्ययनं कृत्वा निर्णयं श्रावितवन्तः सन्ति यत् सामान्येषु मेघेषु जलांशः यावता प्रमाणेन भवति ततोऽपि न्यूनप्रमाणेन भवति शुष्केषु मेघेषु इति।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?



### मार्जारस्य पतनम्

उन्नतात् स्थलात् यदि कश्चित् पतेत् तर्हि सः उद्वेगग्रस्तः भवेत् एव । किन्तु मार्जारः एतादृशं पतनं यदा प्राप्नोति तदा अल्पमपि उद्वेगं न प्राप्नोति ।

अत्र कारणम् - यदा पतनं भवति तदा मानवः व्रणाद्यपायं चिन्तयति । किन्तु मार्जारस्य विषये एवं न दृश्यते । सः तु पतनसमनन्तरम् एव उत्थाय धावति ।

यदा पतनं भवति तदा मार्जारः पादान् प्रसार्य आघातं निवारयति । अपूर्वा संवेदनाव्यवस्था तस्मिन् भवति । अतः पतनावसरे सः झटिति एव स्वस्य सर्वाणि अङ्गानि सज्जानि स्थापयति एतदर्थम् ।



## अभिवर्ध्यतां ज्ञानशक्तिः

एतस्य मासस्य प्रश्नाः
वार्तापत्रिकाप्रपञ्चम्
अधिकृत्य
सन्ति ।



१. भारते प्रकाशिता वर्तमाना च प्राचीना वार्तापत्रिका का ? कया भाषया प्रकाश्यते सा ? कदा तस्याः प्रकाशनम् आरब्धम् ?

२. ऐदम्प्राथम्येन भारते प्रकाशिता पत्रिका का ? तस्याः सम्पादकः कः आसीत् ?

३. 'दि हिन्दु'पत्रिका कदा आरब्धा ? तस्याः संस्थापकाः के ?

४. भारतस्य प्रथमा दिन-पत्रिका का ?

५. तत् राज्यं किं, यस्मात् च कापि वार्तापत्रिका न प्रकाश्यते ?

*(उत्तराणि ७० तमे पृष्ठे)*



# चित्रशीर्षिकास्पर्धा

**अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिना वाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



DHARM NATH PRASAD



DHARM NATH PRASAD

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'डिसेम्बर्'मासस्य शीर्षिकाप्रेषकः -
**अम्बर आचार्यः**
०४, वनितासदनम्, १ अङ्कः,
पडरल्नगरम् वागले एस्टेट्,
**थाणे (पश्चिम) - ४०० ६०४**

**पुरस्कृता शीर्षिका**





**कार्यं विना न नन्दति चित्तम् ।**
**क्रीडां विना हि शून्यं सर्वम् ॥**



## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. बाम्बे समाचार - गुजरातीया - १८२२ तमे वर्षे ।
२. कलकत्ता जनरल् एड्वैसर् - १७८० तमे वर्षे । जेम्स् अगस्टस् हिक्कि । अग्रे तस्याः नाम 'बङ्गाल गेजेट्' इति जातम् ।
३. १८७८ तमे वर्षे । न्यायवादी कस्तूरीरङ्ग अय्यङ्गार्यः, तत्पुत्रः के. श्रीनिवासन् च संस्थापकौ ।
४. बाम्बे हेराल्ड्नामिका - १७८९ तमे वर्षे ।
५. अरुणाचलप्रदेशः ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

# अपरिमितायाः शक्तेः मूलम्



वीणा पित्रादिभिः सह तीर्थयात्राङ्गतया तिरुपतिं गतवती । किञ्चित्कालम् अनुपङ्क्तौ स्थितेः अनन्तरं तैः देवदर्शनं प्राप्तम् । देवदर्शनं प्राप्य सन्तृप्ताः सन्तः ते मन्दिरात् बहिः आगताः । सर्वे बुभुक्षिताः आसन् । अतः ते देवस्थानेन यत्र निश्शुल्कतया भोजनं वितीर्यते तां भोजनशालां गतवन्तः । तत्र सहस्रशः जनाः भोजनं कुर्वन्तः आसन् । सर्वेभ्यः उष्णं भोजनं वितीर्यते स्म । एतत् कथं शक्यम् इति न ज्ञातवती वीणा । तस्याः मातुलः मोहनः पौनःपुन्येन तिरुपतिम् आगच्छति स्म । अतः सा तम् एतस्य कारणं पृष्टवती ।

''सूर्यः अत्र कारणम्'' इति अवदत् मातुलः ।

''कथं तत् ?'' इति आश्चर्येण पृष्टवती वीणा ।

वसतिगृहं प्रति गमनसमये मोहनवर्यः विवृतवान् - ''सौरशक्त्या सम्पाद्यते एतत्सर्वम् । सा च शक्तिः निश्शुल्कतया प्राप्यते अस्माभिः । सौरशक्तिसङ्ग्रहकोषान् भवती दृष्टवती स्यादेव । भवनस्य उपरि स्थापिताः कोषाः सूर्यतः शक्तिम् अधिगृह्य सर्वविधपाकस्य निर्माणाय अपेक्षितां बाष्पशक्तिं जनयन्ति'' इति ।

''यद्यपि सौरशक्तिः निश्शुल्कतया उपलभ्यते, तथापि तस्याः उपयोगावसरे महान् खलु व्ययः करणीयः भवति ?'' इति अपृच्छत् वीणा ।

''तथा नास्ति वत्से ! आधुनिकानां तन्त्रज्ञानानां कारणतः, अद्य विद्युदनिलादिभ्यः यः व्ययः क्रियते अततोऽपि अल्पव्ययेन एव लभ्या अस्ति सा । अन्यच्च सौरशक्तिः परिसरहानिरहिता, अपरिमिततया उपलभ्यमाना च'' इति अवदत् मोहनः ।

''अस्माकं गृहे अपि सौरशक्तेः उपयोगः भवेत्'' - अवदत् वीणा ।

''तत् न हि असाध्यम् । तद्विषये अग्रे वदिष्यामि'' इति अवदत् मातुलः मोहनः ।

CHANDAMAMA (Sanskrit) FEBRUARY 2006
Regd. with Registrar of Newspaper for India No. 42684/85
Regd. No. TN/CC(S)Dn/158/06-08
Licensed to post WPP Inland No. TN/CC(S)Dn/82/06-08, Foreign No. 83/06-08